# शिक्षावल्लरी

# Shikshavallari

( शिक्षाशास्त्रविभागीयपत्रिका )




शिक्षाशास्त्रविभागः

**राष्ट्रियसंस्कृतसंस्थानम्**

मानितविश्वविद्यालयः

भोपालपरिसरः, भोपालम् - 462043

मध्यप्रदेशः

# शिक्षावल्लरी

( शिक्षाशास्त्रविभागीय पत्रिका )

2018-19

**संरक्षकः**
**प्रो.परमेश्वरनारायणशास्त्री**

**प्रधानसम्पादकः**
**प्रकाशपाण्डेयः**

**परामर्शकौ**
**प्रो. प्रभादेवीचौधरी**
**प्रो. जे. भानुमूर्ति**

**सम्पादकाः**

**डॉ. नगेन्द्रनाथ झा**
**डॉ. डम्बरुधरपतिः**
**डॉ. रजनी वी.जी.**
**डॉ. मनीषजुगरानः**
**डॉ. सोमनाथसाहुः**
**डॉ. कृष्णकान्त तिवारी**
**डॉ. सुनील कुमार शर्मा**




शिक्षाशास्त्रविभागः
**राष्ट्रियसंस्कृतसंस्थानम्**
( भारतशासनाधीनः मानितविश्वविद्यालयः )
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया, भोपालम्

| | | |
|---|---|---|
| प्रकाशकः | - | शिक्षाशास्त्रविभागः<br>राष्ट्रियसंस्कृतसंस्थानम्<br>मानितविश्वविद्यालयः, भोपालपरिसरः |
| प्रकाशनवर्षम् | - | 2019 |
| अङ्कः | - | द्वितीय |
| पत्रिका | - | शिक्षावल्लरी |
| मूल्यम् | - | 250/- |
| आकल्पनम्<br>अक्षरसंयोजनञ्च | - | रोहित पचौरी |
| प्राप्तिस्थलम् | - | राष्ट्रियसंस्कृतसंस्थानम् ( मानितविश्वविद्यालयः )<br>भोपालपरिसरः, संस्कृतमार्ग, बागसेवनिया<br>भोपालम् ( मध्यप्रदेशः ) - 462043 |
| दूरभाषः | - | 0755-2418043 |
| दूरप्रैषः | - | 0755-2418003 |
| वैपत्रम् | - | **rsks_bhopal@yahoo.com** |
| जालपुटम् | - | **www.rsksbhopal.ac.in** |
| मुद्रकः | - | **S.M.Systems**<br>**M.P. Nagar, Bhopal** |

**प्रकाश पाण्डेय**
प्राचार्य
राष्ट्रिय संस्कृत संस्थान
( मानित विश्वविद्यालय )
( मानवसंसाधनविकासमन्त्रालय, भारतशासनाधीन )
भोपाल परिसर, संस्कृत मार्ग, बागसेवनिया,
भोपाल - 462043 ( म.प्र. )



**Prakash Pandey**
Principal
Rashtriya Sanskrit Sansthan
(Deemed University)
(Under Ministry of H.R.D., Govt. of India)
Bhopal Campus, Sanskrit Marg, Bagsevaniya, Bhopal - 462043 (M.P.)

# शुभाशंसनम्

**श्लिष्टा क्रिया कस्यचिदात्मसंस्था सङ्क्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु सः शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव॥**

इति कालिदासवचोऽनुसारं यः स्वीयविषयस्य सम्यग् ज्ञाता तथा ज्ञातविषयस्य प्रभावपूर्णसम्प्रेषणे दक्षो भवति स एव उत्तमोऽध्यापकः भवति। ईदृशानामुत्तमसंस्कृतभाषाध्यापकानां निर्माणे राष्ट्रियसंस्कृसंस्थानस्य भोपालपरिसरस्य शिक्षाशास्त्रविभागो बहोः कालात् सततं संलग्नो वरीवर्ति। भाविनां संस्कृतभाषाध्यापकानां बहुविधविकासार्थं नैकविधाः प्रयासा विभागपक्षत आवर्षं क्रियन्ते। अस्मिन्नेव क्रमे शिक्षाशास्त्रविभागद्वारा विभागीयप्राध्यापकानां छात्राणाञ्च शैक्षिकदर्शन-शैक्षिकमनोविज्ञान-शैक्षिकप्रविधि-शैक्षिकप्रबन्धन-पाठ्यचर्या-अधिगमप्रक्रिया-भाषाशिक्षणादि विविधविषयोपेता '**शिक्षावल्लरी**' ति वार्षिकशैक्षिकपत्रिका प्रकाश्यत इति विज्ञाय मोमुद्यते मे चेतः। अवसरेऽस्मिन् विभागीयेभ्यः सर्वेभ्योऽपि विद्वत्प्राध्यापकेभ्यः सम्पादकेभ्यश्च शुभाशयान् साधुवादांश्च विज्ञापयामि। पत्रिकायाः प्रकाशने स्वीयपरिश्रमोपेतान् लेखांश्च प्रदाय साहाय्यमाचरितवद्भ्यः सर्वेभ्यः छात्रेभ्यो भूयांसि वर्धापनानीति शम्।

(आचार्यः प्रकाशपाण्डेयः)

# सम्पादकीयम्

'अनभ्यासे विषं शास्त्रम्' इत्युच्यते। भाषणे लेखने च शुद्धसम्पादनाय अभ्यासः अनिवार्यरूपेण कर्तव्यः। नवनवीनविचाराणामाविष्काराय अपि चिन्तनस्य अभ्यासस्य च पात्रमधिकं वर्तते। तदत्र सफलीकर्तुं परिसरस्यास्य शिक्षाशास्त्रविभागेन ऐषमः **'शिक्षावल्लरी'** नाम्नी वार्षिकी पत्रिका प्रकाशयिष्यत इति महतो हर्षस्य कारणम्। पत्रिकेयं समेषां छात्राध्यापकानां शिक्षकप्रशिक्षकाणाञ्च विविधैः शैक्षिकलेखैः विद्वन्मानसविनोदिनी भविष्यतीति मन्महे।

प्रसङ्गेऽस्मिन् राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिवर्यान् नानाशास्त्रपारङ्गतान् प्रशासनदक्षान् आचार्यपरमेश्वरनारायण-शास्त्रिवर्यान् सश्रद्धं वन्दामहे। पत्रिकाप्रकाशनकर्मणि मार्गदर्शनकृतवद्भ्यः शिक्षावेदान्तादिशास्त्रनिष्णातेभ्यः परिसर-प्राचार्येभ्यः आचार्यः प्रकाशपाण्डेयवर्येभ्यः धन्यवादान् वितरामः। सम्पादनकार्ये सहकृतवद्भ्यः समेभ्यः विभागीयाध्यापकेभ्यः धन्यवादान् निवेदयामः। महाकालेश्वरं स्मारं स्मारं विस्तरभयात् निरमामः इत्थम्।

सम्पादकाः

# विषय-सूची

# छन्दोऽलङ्कारयोः रसानुभूतिः छन्दश्शास्त्रम्[1]

**प्रो. प्रभादेवी चौधरी**
विभागाध्यक्षा – शिक्षाशास्त्र

संस्कृतसाहित्ये छन्दःशास्त्रं स्वकीयं महत्त्वपूर्णं स्थानं भजते। प्राचीनकाले शास्त्रमेतत् छन्दोविचितिनाम्ना प्रसिद्धमासीत्। 'छन्दोविचितिः' अर्थात् यस्मिन् ग्रन्थे विशेषेण छन्दसां चयनं संग्रहो वा कृतमस्ति तत् शास्त्रम् छन्दःशास्त्रम्। अस्य शब्दस्य निर्देशः पाणिनेः गणपाठे (4/3/73) उपलभ्यते सहैव कौटिल्यस्य अर्थशास्त्रेऽपि (1/3) उपलभ्यते। कालक्रमेण शास्त्रमेतत् छन्दोऽनुशासनं, छन्दोविचितिः, छन्दोमान मित्यादिनाम्नाऽपि ख्यातमभूत्।[2] व्युत्पत्तिदृष्ट्या छाद्यते अनेनति छन्दः। अत्र छद् धातोः असून् प्रत्यये कृते रूपमिदं सिद्ध्यति। सहैव चन्दयति अनुरञ्जयति चन्द्यते वा अनेनेति अत्र व्युत्पत्त्या चदि धातोः चन्देरादेश्च छत्वे इत्यौणादिके असुनि चकारस्य छत्वे छन्द इति निष्पन्नः भवति।

**छन्दः द्विविधम्** – वैदिकं लौकिकञ्चेति। छन्दःशास्त्रस्य ज्ञानं यथा वैदिक मन्त्रणामर्थं परिज्ञानाय आवश्यकमस्ति तथैव लौकिकसाहित्यस्यापि नितान्तमावश्यकमस्ति। आर्षेय ब्राह्मणग्रन्थे (1/10) तथा सर्वानुक्रमण्यां स्पष्टनिर्देशोऽस्ति यत् 'यः खलु मन्त्राणां छन्दऋषिदेवताब्राह्मणादीनां नाम अज्ञात्वैव यज्ञं करोति, कारयति पाठयति वा स पापभाग्भवति।'[3]

छन्दः वेदपुरुषस्य पादस्थानीयं वर्तते। अतः यथा पदभ्यामेव देहिनां स्थितिः गतिश्च भवति तथैव वेदाः अपि छन्दोपरि एव अवस्थिताः सन्ति। येन मन्त्रात्मक-वेदस्य वेदता फलाधायकता च वरीवर्ति। यतो हि समस्तः वेदः छन्दोमयविग्रहः अस्ति। उक्तश्चापि पाणिनेः शिक्षाग्रन्थे – 'छन्दः पादौ तु वेदस्य' अर्थात् छन्दः वेदपुरुषस्य पादाङ्गस्वरूपमस्ति। वेदपुरुषस्य पादाङ्गभूतत्वेन अस्य शास्त्रस्येतिहासः तावान् एव प्राचीनोऽस्ति यावान् स्वयं वेदोऽस्ति। तथापि शास्त्रपरम्परया रामानुजाचार्यस्य गुरुणाचार्येणयादवप्रकाशेन विरचितपिङ्गलसूत्रस्य भाष्यान्ते अधोलिखितौ इमौ द्वौ श्लोकौ उपलभ्येते । तद्यथा –

**छन्दोज्ञानमिदं भवाद् भगवतो लेभे गुरूणां गुरु-**
**स्तस्माद् दुश्च्यवनस्ततोऽसुरगुरुर्माण्डव्यनामा ततः।**
**माण्डव्यादपि सैतवस्ततं ऋषिर्यास्कस्ततः पिङ्गल-**
**स्तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः क्रमात्॥**

अस्यां परम्परायामस्य आद्यः प्रवर्तकः शिवोऽस्ति। तदनन्तरं क्रमेण बृहस्पति दुश्च्यवनः (इन्द्रः) शुक्राचार्यः माण्डव्यः सैतवः यास्कः पिङ्गलाचार्याः आसन्। सन्दर्भेऽस्मिन् एषः द्वितीयः श्लोकोऽत्रैव लिखितः वर्तते। तद्यथा –

**छन्दःशास्त्रमिदं पुरा त्रियनाल्लेभे गुहोऽनादित,**
**स्तस्मात् प्रापसन्तकुमारकमुनिस्तस्मात् सुराणां गुरुः।**
**तस्माद् देवपतिस्ततः फणिपतिस्तस्माच्च सत् पिङ्गल -**
**स्तच्छिष्यैर्बहुभिर्महात्मभिरथो मह्यां प्रतिष्ठापितम्[4]॥**

अस्यां परम्परायामपि अनादिः शंकरः एव प्रवर्तकोऽस्ति। शंकरात् क्रमेण गुहः सनत्कुमारः सुरगुरुर्बृहस्पतिः इन्द्रः शेषनागः पतञ्जलिः पिङ्गलाचार्याः आसन्। यद्य छन्द्रःशास्त्रस्य पूर्वोक्तेषु आचार्येषु केचन मान्याः आचार्याः अस्यां परम्परायामपि वर्तन एव तथापि प्रामाणिकदृष्ट्या ऐतिहासिकदृष्ट्या च यादवप्रकाशेन निर्दिष्टा परम्परा एव। माननीया वर्तते।।

वैदिकं लौकिकञ्चेति छन्दः द्विविधम्। तत्र वैदिकमन्त्रेषु प्रयुक्तानि छन्दांसि वैदिकछन्दो नाम्नाभिधीयन्ते। तथा रामायणमहाभारतादिकाव्यग्रन्थेषु प्रयुक्तानि छन्दांरि लौकिकछन्दो नाम्नाख्यातानि सन्ति। तथ्यमिदं विश्वविश्रुतमस्ति यत् अलौकिकत्वात् वेदा न केवलं सकलशास्त्राणामुपजीव्याः सन्ति, प्रत्युत भारतीयधर्मसंस्कृत्यादिसमस्त चिन्तनपरम्पराणामपि नियामकाः सन्ति। अतः लौकिकछन्दसामपि जनकानि वैदिकछन्दांसि एव वर्तन्ते। तथापि प्रयोगदृष्ट्या अनयोर्मध्ये काचिद् भिन्नता दरीदृश्यते। अर्थात् वैदिकछन्दसि स्वरसंगीताश्रयाणि सन्ति, परन्तु लौकिकछन्दांसि वर्णसंगीताश्रयाणि सन्ति। उपर्युक्तैः तथ्यैः सुस्पष्टं भवति यत् अनयोर्मध्ये काचन भिन्नता सत्यपि लौकिक छन्दसा जनकानि वैदिकाछन्दांसि एव वर्तन्ते। परन्तु लौकिकछन्दसा प्रवहन्ती रमणीयैषा धारा वेदात् कदा निस्सृता अभूत् केन प्रकारेण अस्याः विकासोऽभूत् इत्यस्मिन् विषये विदुषां मध्ये मतैक्यं न दृश्यते। कैश्चन विद्वदभिः महर्षिणा पिङ्गलेन प्रणीतः छन्दशास्त्रं नामधेयः ग्रन्थः छन्दशास्त्रस्य प्रथमो ग्रन्थः वर्तते इति स्वीक्रियते परन्तु शास्त्राणामालोडनेन सुस्पष्टो भवति यत् तथ्यमिदं सन्देहास्पदं वर्तते । यतो हि स्वयमेव महर्षिणा पिङ्गलेन वर्णितेषु लौकिकछन्दो विवरणेषु प्राचीनाचार्याणां मतमतानि दृश्यन्ते। तेषु कानिचन निदर्शनानि संक्षेपेणात्र प्रस्तूयन्ते। तत्र अनुष्टुप्छन्दसः वर्णनप्रसङ्गे (5/18) परमाचार्यसैतवमतस्य स्पष्टः उल्लेखः वर्तते। वसन्ततिलकायाः वर्णनप्रसङ्गे परमाचार्यकाश्यपस्य तथा दण्डकस्य विवरणप्रसङ्गे (7/35) परमाचार्यमाण्डवस्य मतं दरीदृश्यते। सहैव एतादृशानि अनेकानि स्थलानि वर्तन्ते येषु पूर्वाचार्याणां मतं दृग्पथे। अवतरति।

प्राचीनाचार्याणां मतमतानामुल्लेखेन सुस्पष्टः प्रतीयते यत् लौकिकछन्दसामाविर्भावः महर्षिपिङ्गलात् पूर्वमेवाभूत्। आचार्ययादवप्रकाशविरचितपिङ्गलसूत्रभाष्ये (यादवप्रकाशभाष्ये) अस्य स्पष्ट उल्लेखः वर्तते यत् अमी महान्तः महर्षिमाण्डव्यादनन्तरमभूवन्, तथापि तथ्यमिदं अकाट्यसत्यं वर्तते यत् लौकिकछन्दसामुद्भवः अवश्यमेव महर्षिपिङ्गलात् पूर्वमेवाभूत्, परन्त्वस्य विकासयात्रायाः श्रीगणेशः आचार्यपिङ्गलस्य करकमलैः एवाभूत्। यतो हि लौकिकछन्दःशास्त्रस्य समुपलब्धसर्वेषु ग्रन्थेषु महर्षिपिङ्गलविरचितपिङ्गलछन्दःशास्त्रं (पिङ्गलछन्दःसूत्रम्) सर्वतः प्राचीनमस्ति। अष्टम अध्यायेषु निबद्धोऽयं ग्रन्थः सूत्रात्मकोऽस्ति। ग्रन्थेऽस्मिन् भट्टहलायुधकृतमृत-सञ्जीवनी वृत्यनुसारेण अष्टाधिकत्रीणि शतानि सूत्राणि वर्तन्ते

यावदप्रकाशभाष्यानुसारं ग्रन्थेऽस्मिन् सूत्राणां संख्या शतत्रयम् वर्तते। आचार्यभास्करेण विरचितपिङ्गलभाष्यराजानुसारं ग्रन्थेऽस्मिन् सूत्राणां संख्या शतत्रयं वर्तते। ग्रन्थोऽयमाकारदृष्ट्या नास्ति

बृहदाकारः परन्तु शास्त्रीयविवेचनदृष्ट्या अतिमहत्त्वपूर्णः अस्ति। एतदतिरिक्तं छन्दःशास्त्रस्योपरि वृत्तरत्नाकरः, छन्दःकौस्तुभं, ज्ञानाश्रयी छन्दोविचितिः, जयदेवछन्दः, रत्नमञ्जूषा, छन्दोऽनुशासनं, वृत्तदर्पणः, वाणिभूषणं, श्रुतबोधः छन्दोमञ्जरीत्यादयः विविधाः ग्रन्थाः समुपलभ्यन्ते।

बीजविटपयोः कथावत् अर्थात् धरण्यां प्रथमं बीजं प्रादुर्भाव अथवा वृक्षः ? यथा प्रश्नः एषः उत्तररहितः वर्तते, तथैव गद्यपद्ययोर्मध्येऽपि स्थितिः वर्तते, अर्थात् प्रथमं गद्य पद्यं वा। विषयेऽस्मिन् मनीषिणां मध्ये मतैक्यं नास्ति। केचन गद्यमनुशंसन्ति केचन पद्यम्। सर्वे स्वस्वमतस्य श्रेष्ठत्वमुपस्थापयन्ति तथा प्रमाणाय विभिन्नान्युदाहरणानि अपि ददति (प्रस्तुवन्ति)। वस्तुतः तथ्येऽस्मिन् न कापि शङ्कायाः समावेशः दृश्यते यत् प्रथम गद्यस्यैवाभिर्भावोऽभूत् यतो हि कवित्वं दुर्लभं लोके इति उक्त्या सर्वे जन्मनैव कवयः न भवन्ति। अतः विचाराणामादानप्रदानयोर्माध्यमः गद्यमेव भवति। परन्त्वत्र एष प्रश्नः समुदेति यत् साहित्यस्य प्राङ्गणे प्रथमं गद्यस्यागमनमभूत् पद्यस्य वा। पूर्वाग्रह-रहितचिन्तनेन तथ्यमिदं सिद्ध्यति यत् व्यवहारसम्पादने स्वात्मविचारं प्रकटयितुं सर्व-प्रथमं गद्यस्यैव आविर्भावोऽभूत्, परन्तु साहित्यस्य सुललितवाटिकायां गद्यस्यापेक्षया पद्यस्यैवागमनं प्राथम्येनाऽभूत्। प्रमाणभूताः साहित्यकग्रन्थाः तथ्यमिदं शङ्खनादेनो-द्घोषयन्ति। संस्कृतआङ्गलहिन्दीबंगलातमिलतेलगु-कन्नडमलयादिभाषाणां प्राचीन-साहित्यिकग्रन्थाः पद्येष्वेव मिलन्ति। येन उपर्युक्ततथ्यानां प्रामाणिकता स्वयमेव सिद्ध्यति।

पुराकाले छन्दोबद्धरचनाया एव परम्परासीत्। अनेन कारणेनैव महर्षिमनु वाल्मीकिव्यासपाराशरादीनां सर्वाः रचनाः पद्यात्मिकाः काव्यात्मिकाः एव दृश्यन्ते। न केवलमेतेषां महानुभावानां रचनाः प्रत्युत तन्त्रवैद्यकज्यौतिषव्याकरणादिशास्त्राणां ग्रन्थाः अपि पद्ये (श्लोके) एव वर्तन्ते। अतः अर्थव्याप्तिदृष्ट्या काव्यशास्त्रस्ययमभिप्रायः आसीत् विविधविषयाणां समग्रं साहित्यम् अर्थात् पुराकाले काव्यशब्दः साहित्यस्य पर्यायः आसीत्। परन्तु कालक्रमेण विभिन्नविदुषां वैचारिकदृष्ट्या अर्थेऽस्मिन् किञ्चित् भिन्नता दृश्यते। राजशेखरकुन्तकादिमनीषिणः साहित्यशब्दस्य प्रयोगं काव्यस्य व्यापकार्थे कृतवन्तः सन्ति।

आचार्यराजशेखरस्य आभ्यां वाचनाभ्यां (वाङ्मयमुभयथा शास्त्र-काव्यञ्चेति) अपि च शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्येति) इदं प्रतीयते यत् काव्यस्य व्यापकार्थे अमी महान्तः छन्दोरसभावलालित्ययुक्तं सरससाहित्यमेव स्वीकुर्वन्ति।

सन्दर्भेऽस्मिन् वक्रोक्तिजीवितकाराचार्यकुन्तकस्य 'साहित्यार्थसुधासिन्धोः सारमुन्मीलयाम्यहमित्यनेन' वचनेनापीदं सिद्ध्यति यत् छन्दोभावरसलालित्ययुक्तं सरससाहित्यमेव काव्यकोटौ समागच्छति। एवं वाग्विलासदृष्ट्या साहित्यशब्दस्य काव्यशब्दस्य च परिभाषात्मकव्याख्यायां भामहवामनरुद्रटमम्मटादिसाहित्यमर्मज्ञानां विचारे किञ्चिद् न्यूनाधिकमन्तरं दृक्पथे अवतरति, परन्तु काव्यसर्जनाय छन्दसामावश्यकतामपरिहार्याङ्गत्वेन प्रायः सर्वे स्वीकुर्वन्ति। तथ्यमिदं सत्यं वर्तते यत् छन्दसा विना काव्यं, नहि भवति श्राव्यं न च मनोभाव्यम् यथा तटस्य बन्धनेन युता नद्याः प्रवहमाना धारा सुवेगवती भवति सुरक्षिता च तिष्ठति तथैव छन्दसा युक्तं काव्यमपि भवति। छन्दोविरहिता कविता तटबन्धविरहिता नदी इव गतिहीना भवति। छन्दः काव्ययोर्मध्ये न केवलं घनिष्टः सम्बन्धः वर्तते, अपितु छन्दः काव्यस्यावश्यकमङ्गमस्ति।

छन्दोविहीनकवितायां हृदयग्राहकतायाः अभावो भवति। छन्दोयुक्तकविता स्वर लयरागादिनादसौन्दर्येण आप्लाविता भवति, सा खलु न केवलं श्रवणसुखदा एव भवति अपि तु श्रोतृणां मनांसि बलात् हरति। उदाहरणार्थं यथा–'जगन्नाथस्वामी नयनपथगामी भवतु मे' (श्रीजगन्नाथाष्टकात्) अस्यां छन्दोरागाप्लावितायां पंक्त्यां यादृशं हृदयग्राह्यत्वं वर्तते तादृशं आनन्दजनकत्वं अस्याः गद्यात्मकार्थे नास्त्येव नात्र कश्चन संदेहः। अपि च आधुनिके युगेऽपि चलच्चित्रेण आकाशवाण्या दूरदर्शनेन वा प्रसारितं गीतं जनाः मानसिकश्रान्त्यमपनयार्थं मनोरञ्जनार्थं वा शृण्वन्ति मनोरञ्जनं च कुर्वन्ति। अत्रैकः सामान्यः समुदेति यत् प्रसारितगीतानां स्थाने यदि, तेषां गीतानां गद्यात्मकार्यस्यैव प्रसारणं चेत् तर्हि कोऽपि श्रोष्यति किम्? यदि कोऽपि पूर्वाग्रही (हठी) वा श्रोष्यत्यपि तदा सः मानन्दनिमग्नः भविष्यति किम्? नूनमेव नकारात्मकमुत्त–रमेवागमिष्यति। अत्र ध्यातव्यं तथ्यमिदं वर्तते यत् यदा सुरतालरागादिना रञ्जितं गीतं श्रुत्वा कोऽपि आनन्दप्लावितः वति, तदा तस्यैव गीतस्य गद्यात्मकार्थश्रवणेन कथं नहि आनन्दमनुभवति? गीतस्य मार्मिकभावस्तु गद्यात्मकार्थेऽपि भवति। अत्रापि एकमेवोत्तरमागमिष्यति यत् सुरतालरागादीनामभावः एव आनन्दाभावस्य कारणमस्ति। उदाहरणम् –

**त्वमेव माता च पिता त्वमेव**
**त्वमेव बन्धुश्च सखा त्वमेव।**
**त्वमेव विद्या द्रविणं त्वमेव**
**त्वमेव सर्वं मम देव देव ॥**

अथवा – **तुम्हीं हो माता पिता तुम्हीं हो**
**तुम्ही हो बन्धु सखा तुम्हीं हो।**
**तुम्हीं हो साथी तुम्हीं सहारे**
**कोई न अपना सिवा तुम्हारे॥**

उपर्युक्तनिदर्शनयोः सन्दर्भ कथनस्य तात्पर्यमिदं वर्तते यत् श्रुतिगोचरानन्तरम् एते छन्दोरागयुक्ते पद्ये यादृशं हृदयं स्पन्द यतः तादृशं स्पन्दनं अनयोः पद्ययोः गद्यात्मकार्थः नैव जनयिष्यति। एतदर्थं तथ्यं सर्वविदितमस्ति यत् श्लोके पद्ये वा यथा रसालङ्कारध्वन्यादिषु आह्लादजनकत्वं भवति तथैव रागातालादिष्वपि भवति । यतिगति आरोहावरोहसुरतालरागादीनां जनकम् छन्दः एवास्ति। अनेन कारणेनैव अस्माकं पूर्वजाः पुराकालीनाः ऋषिमहर्षयः आचार्याश्च एकाक्रियाद्व्यर्थिका प्रसिद्धेति न्यायेन सर्वेषां विषयाणां विशालज्ञानभाण्डागाराणां संरक्षणाय छन्दसां सर्जनं अकुर्वन्। यैः यथा कण्ठस्थीकरणे सुविधा भवति तथैव श्रवणेन श्रावणेन च आनन्दानुभूतिरपि भवति। संक्षेपेण उपर्युक्तविवेचनानां तात्पर्यमिदं वर्तते यत् भारतीयपरिवेशे छन्दसां सर्जनं घुणारक्षरेण न्यायेन अथवा अनुमानेन नाभूत् प्रत्युत संगीतशास्त्राणां नियमानुसारेणाभूत् येषु न केवलं मनोरञ्जनात्मक तत्त्वानामेव प्राधान्यमासीदपितु आयुरारोग्यसंवर्द्धकादि जीवनसंरक्षणात्मकतत्त्वानामपि समावेशः आसीत् । इदमेव कारणमस्ति यत् संस्कृतसाहित्यस्य प्रणयनं छन्दोबद्धपद्येन केन वा अभूत्।

संस्कृतसाहित्यमर्मज्ञास्ते आचार्यमनीषिणः पूर्वाचार्यैः निर्धारितं स्वलक्षणच्युतवृत्तं भिन्नवृत्तं विरसविरामः यतिभ्रष्टमित्यादिछन्दो विषयकम् निरसनपुरस्सर छन्दसां सर्जनं कुर्वन्ति स्म, तथापि

यदि यदा कदा छन्दसः नियमानामनुपालने काव्यरचनायां छन्दसः भङ्गः भवति स्म, तर्हि ते तस्यामवस्थायां व्याकरणनियमान् अनादृत्य शब्दस्य पदस्य वा मूलरूपे परिवर्तनं कुर्वन्ति स्म, परन्तु छन्दोभङ्गम् कदापि न कुर्वन्ति स्म। उक्तञ्चापि–

**अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्।**

एतेन सिद्धान्तानुसारेण अनेक प्रयोगाः दृक्पथे अवतरन्ति, येषु कानिचन निदर्शनानि अत्र प्रस्तूयन्ते। तत्रापि इतरेषां महाकवीनां का कथा? कविकुलकमलोद्भव महाकविकालिदासस्य कुमारसम्भवरघुवंशमहाकाव्यादिषु ग्रन्थेष्वपि एतादृशाः श्लोकाः मिलन्ति येषु छन्दोरक्षायै लौकिकव्याकरणनियमानाम् उपेक्षाऽभूत् । तद्यथा –

**स देवदारुद्रमवेदिकायां**
**शार्दूलचर्मव्यवधानवत्याम्।**
**आसीनमासन्न शरीरपात**
**स्त्रियम्बकं संयमिनं ददर्श।।**

श्लोकेऽस्मिन् त्रियम्बकमित्यत्र स्थाने व्याकरणनियमानुकूलं त्र्यम्बकं इति भवितव्यं परन्तु छन्दसः रक्षार्थं महाकविना तथा न कृतम्। तथैव श्रीरघुवंशमहाकाव्ये–

**तेनाभिघातरभस्य विकृष्यपत्री**
**वन्यस्य नेत्रविवरे महिषस्य भुक्तः।**
**निर्भिद्य विग्रमशोणितलिप्तपुङ्ख**
**स्तं पातयां प्रथममास पपात पश्चात्॥**

अत्रापि पाणिनिनियमानुकूलं शुद्धरूपं 'पातयामास' इत्येव भवितव्यं परन्तु छन्दोनियमस्य परिपालनाय महाकविना तथा न कृतम्। एतादृशानि अनेकानि निदर्शनानि विभिन्नमहाकाव्यादिग्रन्थेषु उपलभ्यन्ते। यैः प्रतीयते यत् काव्यरचनायां छन्दः नियमानामनुपालनमावश्यकं भवति एव। यतो हि छन्दोभङ्गदोषेण न केवलं श्लोकस्य अद्यस्य वा स्वरूपं विकृतं भवति प्रत्युत यतिगतिभावरागानुगुणं पठने पाठने प्रवाहभङ्गेन रसापकर्षणमपि भवति। एतदर्थं काव्यसर्जने 'अपिमाषं मषं कुर्यात् छन्दोभङ्ग न कारयेत्' ति न्यायेन येन केन प्रकारेण छन्दसां मर्यादापालनं भवेदेव इति पूर्वाचार्यमनीषिणां मतमस्ति।

साहित्यशिक्षणस्य सन्दर्भ रसानुभूतये यावत्पर्यन्तं छन्दसामनुगुणं पठन पाठनं न भविष्यति, तावत्पर्यन्तं यादृश्या रसनिष्पत्या भवितव्यम् तादृशी रसनिष्पतिः कदापि न भविष्यति। सहैव रसनिष्पत्याभावे रसानुभूतेः कल्पनाऽपि न कर्तव्या। अतः साहित्यशिक्षणेन छात्रेषु रसानुभूतिः भवेत् एतदर्थं सर्वप्रथमं पाठ्यांशस्य प्रस्तुतीकरणं प्रति विशेषावधानं दातव्यम्। साम्प्रतं साहित्यशिक्षणस्य ये विधयः निर्धारिताः प्रचलिताः वा सन्ति, अध्यापकाः, तेषां संस्मरणात्मकं संकलनमेव कुर्वन्ति, व्यवहारे नानयन्ति। अतः पाठ्यांशस्य स्वरूपानुगुणं समुचितविधिम्प्रति ध्यानं दातव्यम्। तदनन्तरं केषां भावानामभिव्यक्तये कानि छन्दांसि समुपयुक्तानि सन्ति, सहै व कस्य छन्दसः कीदृशं स्वरूपमस्ति, तस्य यतिगतितालरागादीनामनुसारं विस्तृतविवेचनं छन्दो ग्रन्थेषु समुपलभ्यते। साहित्यकक्षायां तेषां समुचितप्रयोगेण रसनिष्पतिः भविष्यत्येव नात्र कश्चन सन्देहः। एतदर्थं प्रथममारम्भिककक्षासु अर्थात्

विद्यालयीयकक्षासु स्तरानुगुणं दत्तावधानेन आगमननिगमनविधिभ्यां छन्दसां ज्ञानं दातव्यम्। इतः परं लक्षणोदाहरणादीनां कठस्थीकरणे बलं दातव्यम्।

तदनन्तरं 'काव्यं सुचिन्तितमथोपरिचिन्तनीयमिति' विश्रुतन्यायेन तेषां लक्षणानामुदहरणानां पौनःपुन्येन अभ्यासः कारणीयः येन छात्राणां मनसि छन्दो विषयकं ज्ञानं चिरं तिष्ठेत्। अत्र इदमपि तथ्यमवधेयं वर्तते यत् अस्मिन् स्तरे उपर्युक्तानि ज्ञानानि तु दातव्यानि एव, सहैव कक्षायां काव्यपाठमाध्यमेनैव रसस्वादनं सौन्दर्यानुभूतिं च कारयेत्। महाविद्यालयीयस्तरे छात्राः प्रबुद्धाः भवन्ति। अतः अस्मिन्स्तरे उदाहरणमु-पस्थाप्य छन्दसां लक्षणानि ज्ञापनीयानि, अत्रापि आगमननिगमनविध्योः उपयोगः स्वीकर्तव्यः सहैव छन्दसः रसानुभूतये छन्दसि निर्दिष्टानां यतिगत्यारोहावरोहादिनियमा-नामनुपालनपुरस्सरं कक्षायां काव्यपाठः समुपस्थापनीयः येन रसापकर्षणं न भवेत् तथा सम्यग्रूपेण सौन्दर्यानुभूतिः भवेत्

समासेन, उपर्युक्तानि तथ्यानि छन्दसां परिज्ञानाय दिशानिर्देशमात्रमेव वर्तन्ते। यतो हि शिक्षणं हि नाम छात्रछात्रासु अन्तर्निहितशक्तीनां विकासः। अतः साहित्यशिक्षणे येन विधिना छात्राः स्वानुभवेन छन्दसां ज्ञानार्जने रसास्वादने च सर्वतोभावेन समर्थाः भवेयुः, शिक्षकाः स्वात्मप्रेरणया तेषामुपयोगं कुर्वन्तु। कोऽपि विधिः अध्यापकात् श्रेष्ठतरः न भवति न भविष्यति। यतो हि अध्यापकः स्वयमेव सर्वेषु विधिषु सर्वोत्तमः विधिः वर्तते।

सन्दर्भाः -

1. युधिष्ठिरमीमांसकविरचितछन्दोमीमासायां 35 - 42 पृष्ठे। यतो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणं वति गर्ने वा प्रपद्यते प्र वा मीयते, पापीयान् भवति। यातया
2. मान्यस्यच्छन्दांसि भवन्ति। दुर्गस्य निरुक्तटीकायां सर्वानुक्रमण्याञ्च।।
3. युधिष्ठिरमीमांसकविरचितछान्दोमीमासायां 57-59 पृष्ठे।
4. युधिष्ठिरमीमांसकलिखितछन्दोमीमासायां 57ङ्क59 पृष्ठे।
5. पिङ्गलाचार्यरचिते छन्दःशास्त्रे हलायुधः।
   मृतसञ्जीवनीं नाम वृत्ति निर्मितवानिमाम् ॥
6. वाक्यसिन्धुपारोऽपि छन्दःसूत्रशतैस्त्रिभिः। येन बद्धो नमस्तस्मै पिङ्गलाद्धुतशिल्पिने पिङ्गलसूत्रभाष्यराजस्य हस्तलिखिते 1737 (72)
7. कुमारसम्भवमहाकाव्यम् 3/44 रघुवंशमहाकाव्यम् 9 / 61

# समावेशी शिक्षा में कक्षाशिक्षक एवं संबलशिक्षक की भूमिका

Role of Class teacher and resource teacher

**डॉ. कृष्णकान्त तिवारी**
संविदा अध्यापक

समावेशी शिक्षा में कक्षाशिक्षक एवं संबलशिक्षक की अत्यन्त महत्त्वपूर्ण भूमिका होती है। क्योंकि समावेशी शिक्षा में भिन्न-भिन्न स्तरवाले छात्र होतें हैं। अत: कक्षा के सभी छात्रों को एकशिक्षण विधि से शिक्षा प्रदान करना अथवा मूल्याङ्कन करना छात्रों को लाभ पहुँच सकता। इसलिए अध्यापक को कक्षा में छात्रों की सीखने की प्रक्रिया में अत्यधिक लचीलापन लाना चाहिए। जिससे अधिक से अधिक छात्र अध्यापक द्वारा सिखाई जाने वाली क्रियाओं को सीख सकें। अध्यापक को किसी भी विषय को सरल से सरलतम तरीके से बच्चों तक पहुँचाना चाहिए। थॉमस आर्मस्ट्रांग ने भी इसका समर्थन किया है। वह बहुमुखी प्रतिभा के सिद्धान्त को शैक्षिकप्रक्रिया में लायें और उन्होंने यह माना है कि इसके प्रयोग से सीखने वाले बालकों को अधिकाधिक उपायों से शिक्षण प्रदान करके उन्हें लाभ पहुँचाया जा सकता है। अध्यापक ही शैक्षिक प्रणाली में केन्द्रबिन्दु की भूमिका अदा करता है। यदि एक अध्यापक अपने छात्रों के समक्ष सही उदाहरण प्रस्तुत नहीं कर पाता तो वह एक अच्छे समाज का निर्माण नहीं कर सकता है। एक विद्यालय या समाज विना अध्यापक के ऐसे है जैसे आत्मा के विना शरीर हड्डियों व खून के विना एक कंकाल, आकृति के विना एक छाया।

डॉ. राधाकृष्णन के अनुसार – 'अध्यापक का समाज में स्थान बहुत महत्त्वपूर्ण है। वह एक पीढ़ी से दूसरी पीढ़ी को बौद्धिक संस्कृतियों और तकनीकी कौशलों को पहुँचाने में मुख्य भूमिका अदा करता है और सभ्यता के दीपक को जलाए रखने में मदद करता है।'

समावेशात्मक शिक्षा प्रणाली में सामान्य, विशिष्ट एवं संसाधन अध्यापकों के बीच सहयोग एवं आपसी समझ होना आवश्यक है। समावेशी कक्षा के अध्यापक को 3R (Right, Role & Responsibilites) अधिकार, भूमिका एवं उत्तरदायित्व की जानकारी होना अत्यावश्यक है। एक समावेशी कक्षा में अध्यापक से अपेक्षा की जाती है कि वह विशिष्ट बच्चों के लिए विद्यालय में इस प्रकार से व्यवस्था करें कि सामान्य बच्चों के साथ समायोजन में उन्हें कोई कठिनाई न हो। चाहे कोई वाणी वाधित श्रवण-बाधित, बाल-अपराधी हो प्रत्येक बालक को अधिगम के समान अवसर मिलने चाहिए। जिस बच्चे को विशिष्ट घोषित कर दिया गया हो, उसे विशिष्ट अनुदेशन देना अध्यापक का उत्तरदायित्व है। विशिष्ट शैक्षिक आवश्यकताओं वाले बच्चे प्रत्येक अध्यापक की जिम्मेदारी होते हैं क्योंकि समावेशी शिक्षा में शिक्षण एक जटिल कार्य है, इसलिए प्रत्येक अध्यापक को अतिरिक्त समय, प्रशिक्षण संसाधन एवं समुदाय तथा अभिभावकों का सहयोग

मिलना चाहिए।

इसी प्रकार विद्यालय में सम्बल अध्यापक की नियुक्ति सामान्य अध्यापक के सहयोग हेतु की जाती है ताकि समावेशिक परिवेश में बाधित बच्चों की आवश्कताओं की पूर्ति में सहायता हो सके। सम्बल अध्यापक ऐसी विधियों का प्रयोग करता है जिससे सामान्य एवं विशिष्ट बालकों को एक साथ बिठाकर सफलतापूर्वक पढ़ाया जा सके।

# सेवापूर्वाध्यापकानां जीवनशैल्यां स्वास्थ्यचेतनायाः महत्वम्

**सुशीलकुमारः**
शोधच्छात्रः

जीवनशैली स्वस्थजीवनयापनाय काचिद् नियन्त्रितानुशासिता व्यवहारोपयोगि–कार्यप्रणाल्याः प्रक्रिया वर्तते। यस्यां मानवानां दैनिक दिनचर्यायां कृतकार्याणां परिणामः वर्तते। जीवनशैली मानवजीवनस्यैका कला वर्तते। शिक्षया मानवजीनस्य जीवनकलायाः।

परिचयं भवति। जीवनं कीदृशं स्यात् जीवनस्य शैली कीदृशी स्यात्, जीवनं कथं जीवेम, एतादृशीभावना समस्तप्राणिषु वर्तते। मानवजीवनस्य विकासे जीवनशैलीनां विषये श्रीमद्भगवद्गीतायां श्रीकृष्णेन उक्तं यत् –

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परागतिम्।।** (श्रीमद्भगवदद्गीता 623)
**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्य व्यवस्थितौ।**
**ज्ञात्वाशास्त्रं विधानोक्तं कर्मकर्तुमिहार्हसि।।**( श्रीमद्भगवदद्गीता 623)

अर्थात् यः मनुष्यः शास्त्रविधिं परित्यज्य स्वेच्छया स्वेच्छाचरणं करोति सः न च सिद्धि प्राप्नोति न च सुखशान्तिं प्राप्नोति न च परं गतिं प्राप्नोति। जीवनशैलीविषये आयुर्वेदशास्त्रं वदति यत् –

**'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्'**

ईश्वरीयनियमपालनेन शरीरं रोगमुक्तं भवितुं शक्नोति। सेवापूर्वाध्यपकानां शैक्षिक क्षेत्रे आदर्शजीवनविकासाय स्वास्थ्यचेतनायाः आवश्यकता महत्वपूर्णा वर्तते। यतो हि कस्यापि राष्ट्रस्य निर्माण अध्यापकस्य हस्तौ वर्तते। यदि राष्ट्रस्याध्यापकानां स्वास्थ्यं समीचीनं नास्ति, तर्हि राष्ट्रस्य भाविभविष्यस्योन्नतिः समीचीनं न भवितुं शक्यते। अतोऽत्र सेवापूर्वाध्यापकानां जीवनशैल्यां स्वास्थ्यचेतनाया वर्तमानशैक्षिकपरिप्रेक्ष्ये परमावश्यकं वर्तते। स्वास्थ्य चेतनायाः कोऽर्थः अस्य प्रश्नस्योत्तरं वर्तते यत् स्वास्थ्यं नाम शारीरिकमानसिकसामाजिकस्थितीनां पूर्णदशा भवति। अतः स्वास्थ्यजीवनस्य सः गुणः वर्तते यः व्यक्तिविशेषं सुखपूर्वकं जीवनार्थं सर्वोत्तमरुपेण योग्यं करोति।

स्वास्थ्यं व्यक्तिगतजीवनार्थमेव आवश्यकता नास्ति अपितु राष्ट्रजीवनस्यावश्यकं वर्तते। अतः देशस्य भाविनागरिकाणां स्वास्थ्यं प्रति जागरूकतायाः ध्यानं दद्यात्। अस्माकं संस्कृतसाहित्य स्वास्थ्यचेतनां प्रति ध्यानमाकर्षणमत्यधिकं दरीदृश्यते। यथा कुमारसम्भवे –

**'शरीरमाद्यंखलुधर्मसाधनम्'**

आदौ शरीरं स्वास्थं भवति चेत् अनन्तरं किमपि कर्तुं प्रभावामः। न केवलं शारीरिकविकासः अपितु मानवानां मानसिक–भावात्मक–चरित्रात्मक–सामाजिक–नैतिक विकासः भवितुमर्हति। तदर्थं समाजे प्रथमावश्यकता स्वास्थ्यमेव भवति । स्वास्थ्यविकासाय
शारीरिकशिक्षासम्बन्धि केचन बिन्दवः प्रदश्यन्ते।

1. स्वास्थ्यशिक्षा माध्यमेन प्राथमिकचिकित्सायाः प्रशिक्षणम्।
2. स्वास्थ्यशिक्षा माध्यमेन व्याधीनां निराकरणम्।
3. स्वास्थ्यशिक्षा माध्यमेन स्वास्थ्यविज्ञानस्य ज्ञानम्।
4. स्वाथ्यशिक्षा शारीरिकविकृतीनां निवारणे सहायिका भवति।
5. स्वास्थ्यशिक्षा स्वास्थ्यसम्बन्धी उत्तमानां गुणानां निर्माणे सहायिका।
6. स्वास्थ्यशिक्षया शारीरिक–मानसिक–नैतिक व्यावसायिकयोग्यता विकासः।
7. सुखमयजीवनयापने सहायिका।
8. स्वस्थशरीरे स्वस्थ मस्तिष्कनिर्माण सहायकः।

स्वास्थ्यचेतनाविषये पतञ्जलियोगशास्त्रे अष्टांगयोगस्य स्थानं महत्वपूर्ण वर्तते। तद्यथा– 'यम–नियम–आसन–प्राणायाम–प्रत्याहार–धारणा–ध्यान–समाधि' क्रमेण स्वास्थ्यचेतनाविकासे सहायको भवति। अस्मिन् चित्तवृत्तिनिरोधाय योगशास्त्रे बहूनि आसनानि वर्तन्ते यथा–पद्मासनं, मयूरासनं, शीर्षाशनं भुजंगासनमित्यादयः।

योगमाध्यमेन व्यक्तेः शरीर,मन, इन्द्रियादिस्थिरचित्ताः भविष्यन्ति। स्वस्थ्यचेतनायां योगः शारीरिकविकासे मानसिक विकासे नैतिकविकासे च सहायको भवति। उक्तं च यत्

**योगेन चित्तस्य पदेन वाचा मलः शरीरस्य च वैद्यकेन्।**
**योपाकरोतं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलरानतोऽस्मि।**

अतःयोगेन सेवापूर्वाध्यापकानां जीवनशैल्यां स्वास्थचेतनायाः विकासक्रमे महत्वपूर्ण योगदानं वर्तते। यदि सेवापूर्वाध्यापकानों आदर्शजीवनशैली वर्तते तर्हि छात्राणां मानसिकशारीरिकनैतिकचारित्रिकविकासः सम्यक्तया सम्भवति।

**सन्दर्भाः**


1. कुमारसम्भवम् ।
2. भट्टाचार्य,जी.सी.(2003) अध्यापकशिक्षा, आगरा–विनोद पुस्तक मन्दिर।
3. शारीरिकशिक्षा ।
4. www.futuresamachar.com
5. http//dailyhunt.in

# व्यक्तित्व विषये भारतीय स्वरूपं महत्त्वञ्च

**विकासकुमारवपाण्डेयः**
शिक्षाचार्य द्वितीयवर्षम्

व्यञ्जतेऽनयेति व्यक्तिः तस्याः भावः व्यक्तित्वम् वि उपसर्गपूर्वक अञ्ज् धातोः क्तिन् प्रत्ययः तदनन्तरं त्व प्रत्यय कृते सति व्यक्तित्वं पदमिति निष्पन्नम्। जीवनस्य सर्वासु परिस्थिति जनानां विशिष्टाचरणस्य व्यवहारकौशल्याश्च प्रदर्शनं दृश्यते। सर्वैजनाः स्वकीयया अन्तक्रियया कार्यपद्धतिं प्रभावयन्ति। सर्वासु परिस्थितिषु व्यक्तित्वमेकं महत्त्वपूर्णत्वेन निर्वहति। आत्मनः व्यवहारमन्येषां समक्षं उपस्थापयति। एतत् सर्वं तस्य व्यक्तित्वमेव सूचयति। व्यक्तेः चित्तवृत्तिभेदेन व्यक्तित्वस्य अनेकरूपता दरीदृश्यते।

व्यक्तित्वपदमाङ्गलभाषायाः (Personality) इति पदस्य समानार्थकं वर्तते। Personality शब्दः अयं लेटिनभाषायाः (Persona) मूलपदात् निष्पन्नम्। Persona इत्यस्य आङ्गलभाषायां मुखावरणं (Mask) इत्यस्मिन् अर्थे भवति। पुरा नरः स्वगृहीत पात्रानुगुणं मुखावरणं धारयन्ति स्म।

**व्यक्तित्वस्य परिभाषा -**

व्यक्तित्वम् आत्मानं प्रति इतरान् च प्रति क्रियमाणस्य व्यवहारस्य समग्रं चित्रं वर्तते। एतस्मिन् जनस्य यत्किमपि शारीरिकं मानसिकं संवेगात्मकं सामजिकमाध्यात्मिकं वा भवति तत्सर्वं समाहितं भवति। एवं व्यक्तित्वपदस्य बाह्याकृते व्यवहाराभिव्यक्तेश्चत्यर्थं धारयति।

Personality is the total quality of on individuals behaviour-Woodworth.

**मार्टन प्रिंस महोदयानुसारम् -**

'व्यक्तित्वं व्यक्तेः सर्वविधानां जन्मजातप्रवृत्तीनां, आवेगानां प्रवृत्तीनां, कामनानां मूलप्रवृत्तीनामनुभवेन च अर्जितानां तत्त्वानां योगो वर्तते।

व्यक्तित्वविषये भारतीय चिन्तनम् -

यद्यपि सर्वेऽपि जनाः अद्वितीयमेव भवन्ति एवञ्च सर्वेऽपि परस्परं भिन्नं भवन्ति। सर्वेषां पार्श्वे कश्चन गुण विशेषः अवश्यमेव भवति। कोऽपि मानसिकानि शारीरिकाणि उभयविधकारकाणि संयोजितानि। तेन व्यक्तित्वं हि अन्यान् प्रति विभज्यते। सर्वैषामेव व्यक्तित्वं पृथगेव भवति।

व्यक्तित्वस्वरूपविषये शास्त्रेषु विद्वद्भिः विवेचनं कृतो वर्तते। भारतीय वाङ्मये व्यक्तित्वस्याध्ययने आत्मनः स्वस्य च केन्द्रीय स्थानं वर्तते। दर्शनशास्त्रे आत्मस्वरूपं विवेचनं वर्तते। उपनिषत्सु निरूपिताः अन्नमयादि पञ्चकोषाः शरीरात् आत्मानं प्रति उत्तरोत्तर व्यक्तित्वस्य परिचायकाः वर्तन्ते।

प्रथमोऽन्नमयकोषः शरीरस्य सर्वोपरिकोषो वर्तते मानवस्य स्थूल शरीरमन्नमय कोशः

वर्तते।

द्वितीयः प्राणमयकोशः जीवनस्य शक्तेर्वासनाभ्यश्चौतप्रोतो वर्तते। पञ्चकर्मेन्द्रियाणां विवरणं प्राणमयः कोशः वर्तते। तृतीयः मनोमय कोशः – अस्मिन् आत्मनः मनः स्वरूपं विविच्यते। उक्तं हि यत्–

**'मन एव मनुष्याणां कारणे बन्धन मोक्षयोः'**

इतिधिया सर्वाङ्गं पूर्णव्यक्तित्वस्य मनोमय सोपानस्य आधारः मन एव वर्तते। चतुर्थः विज्ञानमयकोशः – अस्मिन् व्यक्तित्वे आध्यात्मिकबुद्धिः उपस्थिता भवति। बुद्धि संयुक्तानि पंचसंख्याकानि ज्ञानेन्द्रियाणि विज्ञानमयकोशनाम्ना अभिधीयन्ते। पञ्चमः आनन्दमयकोशः – अत्र भोगानां शान्ते सति बुद्धिः वृत्तिः निद्रायाः रूपे विलीना जायते सैव आनन्दमयकोषः वर्तते। एतस्यार्थो भवति– आनन्द प्राचुर्यम्। व्यक्तित्व विषये श्रीमद्भगवद्गीतायां सत्त्वरजस्तमो गुणभेदेन मानवाः सात्त्विकाः राजसाः तामसाः इति त्रिधा विभाजनं वर्तते।

**सत्त्वं रजस्तम इति गुणाः प्रकृति सम्भवाः।**
**निवध्नन्ति महाबाहो देहे देहिन मव्ययम्।**

त्रयोऽपि गुणाः सत्त्वरजस्तमोगुणाश्च एते प्रकृत्या एव जीवात्मा निवध्नान्ति।
केचन सत्त्व गुण प्रधानाः भवन्ति। यथा –

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्।**
**सुखसङ्गेन बध्नाति ज्ञान सङ्गेनचानघ।।**

केचन रजोगुण प्रधानाः भवन्ति। यथा –

**रजोरागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्**
**तन्निवध्नाति कौन्तेय कर्म सङ्गेन देहिनम्।।**

केचन तमो गुणप्रधाना भवन्ति। यथा –

**तमस्वज्ञानहं विद्धि मोहनं सर्वदेहिनाम्।**
**प्रमादालस्य निद्राभिस्तन्निबध्नाति भारत।।**

इतोऽपि आयुर्वेदशास्त्रे वातपित्तकफरूप धातुत्रय पुरस्कृत्य व्यक्तित्वभेदाः वर्तन्ते। ज्योतिषशास्त्रे जन्मराश्यनुगुणं व्यक्तित्वं द्वादशधा कल्पयन्ति।

एवं प्रकारेण भारतीयवाङ्मये व्यक्तित्वस्य स्वरूपः तदन्तरर्निहितगुणाश्च वर्तते।

**व्यक्तित्वस्य महत्त्वम् –**

संसारेऽस्मिन् व्यक्तेः प्रतिष्ठा तस्य व्यक्तित्वं समाश्रिताः। अनादरे प्रतिष्ठा वा व्यक्तित्वाधारेण भवति। लोकव्यवहारं दृष्ट्वा अवगन्तुं शक्यते। व्यक्तित्वप्रत्यायकाः महत्त्वसाधकाः पञ्चवकारादि शब्दाः –

**'वस्त्रेण वपुषा वाचा विद्यया विनयेन च'**

व्यक्ते वस्त्राणि दृष्ट्वा सम्मानं प्राप्नोति क्वचिद् अपमानं। समीचीनं शुभ्रवस्त्राञ्चितः व्यक्तिः क्वचिद् मूर्खोऽपि प्रथमदर्शने आदर एव भवति वस्त्रं व्यक्तेः व्यक्तित्व परिपोषणे आद्यमिति अङ्गीकुर्वन्ति। मनोवैज्ञानिकाः ततः रूप वर्णादियुक्तं शरीरं व्यक्तित्व प्रभावोत्पादकं भवति।

रूपलावण्यवर्णनानि लोके काव्ये च अस्य महत्त्व प्रत्यायकानि। कृशत्वं, पङ्गत्वं, अन्धत्वादि दोषैः आत्मनि न प्रत्ययः इति व्यवहारे लज्जात्वादि दोषाः समापतन्ति। क्वचिद् विकृतयः शरीरस्य मानसिकां स्वास्थ्यं जनयति इति लोकव्यवहारे प्रत्यक्षः।

ततः वाचः व्यक्तित्वं परिचायकेषु विशिष्य स्थानं भजते। वाग्मितायाः अभावे सद्यः वस्त्रवपुभ्यां प्रतिष्ठा लाभे शनैः शनैः अनादरभावः समुपजायते। अत एवोक्तं भतृहरिणा–

**'विभूषणं मौनमपण्डितानाम्'**

# भारतीय दर्शनम्

**शशिभूषण उपाध्याय**
शिक्षाचार्य द्वितीय वर्ष

भारतीय दर्शन हि अतीव पुरातनम् व्यापकं मौलिकञ्च शास्त्रम्, इदं खलु तत्व ज्ञानम्, अध्यात्मविद्या, आन्वीक्षकी ब्रह्मविद्या, मीमांसा सम्यक्दर्शनमित्यादिभिः विविधैरभिधानैरभिधीयते परं सर्वेष्वप्येतेषु अस्य गाम्भीर्य वैशिष्ट्यञ्च अविच्छिन्नतया संसूचितमित्यत्र नास्ति संशीति लेशः अस्य रहस्यमयस्य निगूढ़तमस्यपपञ्चस्य समाधानपथप्रदर्शकं शास्त्रमिदं किल दर्शनमित्यभिधीयते तत्र महर्षिणा दिव्यचक्षुषां साक्षात्कृत धर्मणां तपोपूतया धि ष्ण्याऽविर्भूतं सत्याऽसत्य निकषलक्षण सकल पदार्थ जातस्यालोचनपरं ज्ञानमेव दर्शनम्। यदा लौकिक चिन्ता विमुक्तः विचिन्त्या कोऽहं? कुतोऽहम्? कस्मादहम्? कुतस्त्वमायातः? इत्यादीन् गूढ़ प्रश्नान् एतादृश चिन्तन मनन परिणतिभूतमेवेदं दर्शनशास्त्रम्।

उक्तञ्च – आत्मा वा रे द्रष्टव्यः श्रोतव्यो, मन्तव्यो निदिध्यासितव्य इति आत्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विज्ञातम्भवति।
सम्यक्दर्शन सम्पन्नः कर्मभिर्ननिबध्यते, दर्शनेनं विहीनस्तु संसारं प्रतिपाद्यते।।

जीवनस्य चरमोद्देश्यं प्रति संप्रेरणं तत्र च श्रेयः प्रेयसो ज्ञानकर्मणो अध्यात्मभूतयोः आदर्श व्यवहारयोश्चानवद्यं संतुलनं भारतीयदर्शनस्य प्राणभूतूम्।

आधिभौतिक आधिदैविक आध्यात्मिक त्रिविधतापेभ्यः सन्तप्यमानानां तनुभृता निरति शयानन्दरूपं भोक्षमार्गं प्रदर्शनमेव भारतीयदर्शनानां परमप्रयोजनम्
तर्हि प्रथमतः दर्शनं नाम किं इति जिज्ञासायां–

- ◆ दृश्यते ज्ञायते विचार्यते अनेन इति दर्शनम्।
- ◆ दृश् धातोः (दृशिरप्रेक्षणे) ल्युट् प्रत्यये सति दर्शन शब्दः निष्पन्नः।
- ◆ दृश्यते अनेन इति दर्शनम्।
- ◆ दृश्यते चाक्षुष प्रत्यक्षं क्रियते अनेनेन्द्रियेण तद् दर्शनम्।
- ◆ दर्शनं शब्दो नेत्र पर्यायः।
- ◆ दृश्यतेऽअनेनेति दृशे करणे ल्युटि दर्शनम् नयमन् भावे ल्युटि चाक्षुषिज्ञानम् (शब्दकल्पद्रुमे)।
- ◆ दृश्यते यथार्थतत्वमनेनेति शास्त्रं दर्शनमिति –(मेदिनी कोशः)।
- ◆ दर्शनञ्च ज्ञानकरणञ्च दृशेज्ञान सामान्यार्थकत्वात्।

- दृश्यते निश्चीयते यत् तद्दर्शनमिति कर्मणि ल्युट् व्याख्येयः।
- दर्शन शब्दस्य आंग्लपदं भवति Philosophy इति पदं यूनानी शब्द Philosophï इति पदद्वयात् निष्पन्नम् यस्यार्थः भवति love of wisdom अर्थात ज्ञानासक्तिः, आस्तिक नास्तिक भेदेन दर्शनं दिविधं।
- दर्शनं नाम - आत्मा परमात्मा, जीव-जगत, जन्म-मृत्यु, तथा मोक्षप्रकृति इत्यादिना रहस्यं येन ज्ञायते तद्दर्शनम्।

**परिभाषा -**

**प्लेटो** - यः जनः ज्ञानप्राप्तये नूतनवार्ता अन्वेषणे रुचिं प्रकटयति तथा सन्तुष्टः न भवति सः दार्शनिकः।

**सुकरात** - ज्ञानस्य पिपासवः दार्शनिकाः।

**डा. राधाकृष्णन्** - दर्शनं नाम अन्वेषणं यत् तर्कपूर्ण यच्च अन्वेषणं यथार्थेन वास्तविकतया सह संबंधः भवति।

**जानड्यूवी** - ज्ञान प्राप्तीकरणं यत् जीवनस्य मार्गं प्रभावयति।

**प्लेटो** - पदार्थानां यथार्थ स्वरूपस्य ज्ञानप्राप्तिः दर्शनम्।

**अरस्तु** - दर्शनमित्थं विज्ञानम् यत् परमतत्वस्य यथार्थस्वरूपस्य निरीक्षणंपरीक्षणं करोति।

**काण्ट** - दर्शन-बोध क्रियायां विज्ञानं तथा तस्या लोचना।

**फिक्टे** - दर्शनं ज्ञानस्य विज्ञानं।

**भारतीय दर्शन सम्प्रत्ययः**

- वस्तुतः दुखनिवृतेः उपायाः दर्शने सन्ति।
- सृष्टि प्रारम्भात् एव दुखमस्ति तस्य उपायं दर्शने एव अतः इत्थमनुमीयते यत् भारतीयदर्शनानामुत्पतिः सृष्टिना सहाभवत्।
- भारतीय दर्शनस्य एकमात्रं लक्ष्यं दुखस्य परमनिवृत्तिः अथवा परमानन्दस्य प्राप्तिः
- भारतीय दर्शनेषु महत्वपूर्ण प्रबल उपकरणः आत्मा अनात्मा, जीव ब्रह्म प्रकृतिः पुरुष, जीवन-मरण, सत्य धर्म मोक्ष तथा मानव जीवनस्यपरमोद्देश्यस्य विवेचना वर्तते।

**भारतीय दर्शनस्य विशेषता**

- भारतीय दर्शनस्य मूलः अत्यन्तं प्रबलं एवं आन्तरिकं (गहरी) वर्तते यत पाश्चात्य दर्शनस्य अयं सम्मुखे शून्यं प्रतिभाति।
- भारतीय दर्शनस्य दृष्टिकोणः व्यवहारिक पक्षः आन्तरिकश्च वर्तते। न केवलं बौद्धिक जिज्ञासायाः तृप्तिः (दूरदृष्टिः, भविष्य दृष्टि, अन्तर्दृष्टि)।
- आत्मनः अस्तित्वे विश्वासः (चार्वाक, बौद्धो विहाय)।
- कर्मवादस्योपरि विश्वासः, पुर्जन्मोपरि विश्वासः (चार्वाक बौद्धो विहाय)।
- भारतीय दर्शनस्य लक्ष्यं मोक्षप्राप्तिः
- आत्मनियंत्रणे एकाग्र चित्तने ऋतौ विश्वासः, प्रगतिशीलताञ्च।

**भारतीय दर्शनस्य भेदः**

| **आस्तिक** | **नास्तिक** |
| --- | --- |
| 1. सांख्य – कपिलः | 1. चार्वाक – कणादः |
| 2. योग – पतंजलिः | 2. बौद्ध – बुद्धः |
| 3. न्यास – गौतमः | 3. जैन – महावीरः |
| 4. वैशेषिक – कणादः | |
| 5. पूर्व मीमांसा – | |
| 6. उत्तर मीमांसा – | |

**कालक्रमेण भारतीय दर्शनस्य विकासः** – प्राचीन कालात् एव भारतीय जनमानसे दार्शनिक चिन्तनस्य अविच्छिन्नाः धाराः प्रवाहिता जायते स्म। भारतीय दर्शनस्य दृष्टेः अत्यन्त उदार एवं व्यापकीभूता कारणात् भारतीय दर्शनस्य प्रत्येकः शाखा अत्यन्तः व्यापकः समृद्धः चास्ति तर्हि भारतीय दर्शनस्य ऐतिहासिक विकासस्य क्रमं निम्न चरणेषु विभक्तुं कर्तुं शक्यते।

(1) वैदिककालः (Vedic Period) – (1) पूर्व वैदिककालः (2) उत्तर वैदिककालः

(2) महाकाव्यकालः (Epic Period)

(3) सूत्रकालः (Sutra Period)

(4) वर्तमान अथवा समसामयिक काल (Modern and Contemporary Period)

**(१) पूर्ववैदिककालः** – अयं कालः भारतीय दर्शनस्य आरंभिकः प्राचीनः कालास्ति अस्मिन् काले वेद उपनिषत्सु रचना जाता भारतस्य सम्पूर्ण दर्शनं वेदांनां उपनिषदानां विचाराणां बहु प्रभाविता जाता। वेदाः अर्चाणां प्राचीनतमा साक्ष्याणां एव नास्ति अपितु सम्पूर्णभारत एवं यूरोपीय भाषायाः प्राचीनतमम् साहित्य रूपे समादृतम् अस्ति। अयं रचनाकालः मैक्समूलर 1200 वर्ष ई.पू., तिलकः 6000 वर्ष पूर्व, याकोबी 4500 वर्ष ई.पू. स्वीकरोति। मौखिक परम्परया प्राप्त्वाकरणेन समस्त वैदिक साहित्यस्य कृते श्रुति शब्दस्य प्रयोगः कृतः।

**(२) उत्तरवैदिककालः** – अयं वेदविरोधी कालः वर्तते। भारतीय दर्शनेषु– 6 शताब्द्यां पूर्व कालः वस्तुतः वैचारिक क्रान्तेः कालं मन्यन्ते। अस्मिन् समये अनेकाः महापुरुषाः एवं मनीषिणां चिन्तनस्योपदेशं कालं आसीत्। काचित् सामाजिक परिवर्तनानि अपि परिलक्षितानि जातानि। समाजस्य काचित वर्गाणां स्थितिं एव दयनीयाऽसीत् कष्ट निवारणेः धार्मिक जिज्ञासवः अधिकाः आसन्। अत्रत्य एव धर्म दर्शनस्य उहः प्रारंभः अभवत्। जैन बौद्ध धर्मस्य विचाराणां अभिनव दर्शनेन सह अवैदिक धर्म दर्शन परम्परायाः प्रारम्भः अजायत। अयं यज्ञ कर्मकाण्ड, ईश्वरः, आत्मा वेदस्य विरुद्धः आसीत्। अयं निरीश्वरवादी एवं क्रियावादी विचाराणां परिपोषकाः आसन् अस्य कृते दार्शनिक निष्ठायाः मूल आधारः संसारवादः वा कर्मवादः / पुनर्जन्म सिद्धांताः आसन् अयं कारणे समाजे जनसामान्यै जैन बौद्धानां विचाराणां लोकप्रियता अवर्द्धयन्।

**महाकाव्य काल** – अस्मिन् काले औपनिषदिक दार्शनिक विचारधारा विभक्ता वैचारिक

साम्प्रदायिक का उपाधारा: स्वरूप: ग्रहणं अकुर्वन आसीत्, बौद्ध जैन, शैव, शाका: विभिन्ना: सम्प्रदाये परिणत: स्व स्व मत पंधाना प्रसार प्रचार कार्ये तत्परा अजायन्ते स्म: अयं समाजा: तत्कालीन दार्शनिक सम्प्रदाया: आमनन्ते एवं समाजस्य कुरीतीनां दूरी करणार्थं समाज सुधारक रूपेण ख्यातवन्त:।

**सूत्रकाल** - अयं भारतीय दर्शनस्य विकासस्य महत्वपूर्ण कालं आमनन्ते। ई.पू. 400 ई. 150 ई.पू. यावत् मौर्यकाले दार्शनिक सूत्र साहित्य: स्वविकास शिखरे अप्राप्नुत:। अस्मिन् काले गौतम महर्षे: न्यायसूत्राणां, कणाद महर्षे वैशेषिक सूत्राणां जैमिनीमहर्षे: मीमांसा सूत्राणां रचनां अकरोत्, कपिल महर्षे: सांख्य सूत्राणां, पतञ्जले: योग सूत्राणां एवम्प्रकारेण विभिन्न दार्शनिक विचारधारायां रचना अभवत्, बादरायण व्यास: वेदान्त सूत्राणां रचना कृता। अस्मिन् युगे विभिन्न दार्शनिक सम्प्रदायानां अध्यात्म विषयक चिन्तन सूत्ररूपेण निबद्धा जाता।

**व्याख्याकाल** - भारतीय दर्शनस्य अयं युग: स्वर्णयुग: अकथ्यते। अस्मिन् काले दर्शन ग्रन्थानोपरि अनेका: भाष्या:, व्याख्या, वार्तिक: एवं टीकानां लिखिता वर्तते। सूत्रा: संक्षिप्ता: भवन्ति दुर्बोधा: भविष्यन्ति। अतएव अयं व्याख्या कृत्वा सुबोधं भाष्यं अरचयत् विद्वांसा: उक्तञ्च -

**सूत्रार्थो वर्ण्यते येन पदै: सूत्रनुसारिभि:।**
**स्वपदानि च वर्ण्यन्ते भाष्यविदो विदु:॥**

350 ई.पू. यावत् व्याख्या काले भारतीय षड् आस्तिक दर्शनानां मूलग्रन्थे सूत्राणां वृत्ति भाष्या: विभिन्न टीका: लिखिता जाता। यथा कुमारिल भट्ट: एवं प्रभाकरेण मीमांसा सूत्रे मीमांसा भाष्य: लिखिता, शंकर: एवं रामानुजे: वेदान्तसूत्रे वेदान्त भाष्य वात्स्यायन: न्याय सूत्रे न्यास भाष्य, प्रशस्तपाद: वैशेषिक सूत्रे वैशेषिक भाष्य: एवं विज्ञानभिक्षु: सांख्य सूत्रे सांख्यप्रवचनभाष्य: लिखिता वर्तते। एवंप्रकारेण व्यास महर्षे योगसूत्रे योगभाष्य: लिखिता। एवं अतिरिच्य बादरायण: वेदान्त सूत्राणां अनेका प्रमाणिका: भाष्या: शंकराचार्य:, रामानुज:, वल्लभाचार्य, मध्वाचार्य, निम्बार्काचार्य, कुमारिल भट्ट, वाचस्पति मिश्र:, उदयन, जयन्तभट्ट इत्यादि दार्शनिका: विचारका: अयं काले अभवत् अयं 250 ई.य. यावत् 1450 ई.स. पर्यन्तं व्याख्या काल: आमनन्ते स्म।

**अन्य सम्प्रदाया:**

(1) आचार्य शंकर - सर्वसिद्धान्तसंग्रह - 10 दर्शनानि

(2) जिनदन्न सूरि - षडदर्शन समुच्चय - 6 दर्शनानि

(3) माधवाचार्य - सर्वदर्शनसंग्रह - 16 दर्शनानि

(4) जयन्त भट्ट - 6 आस्तिक, 6 नास्तिक, 12 दर्शनानि

पाश्चात्य दर्शनानि अनुसरन् भारतीय दार्शनिका:-

(1) प्रकृतिवाद: - दयानंद, टैगोर, मालीय, गांधी, अरविन्द

(2) आदर्शवाद: - विवेकानंद (न्याय, वैशेषिक)

(3) प्रयोजनवाद: - चार्वाक

(4) यथार्थवाद: - चार्वाक (व्यवहार, अस्तित्व, भौतिक, समाजवाद, मार्क्स)

**संदर्भ ग्रंथा:**

1. सर्वदर्शन संग्रह - मध्वाचार्य
2. भारतीय दर्शन - जगदीशचंद्रमिश्र, चौखम्बा सुरभारती
3. भारतीय दर्शन - बलदेव उपाध्याय, विश्वविद्यालय प्रकाशन
4. भारतीय दर्शन - वाचस्पति गैरोला
5. भारतीय दर्शन - ममता मिश्रा, कला प्रकाशन वाराणसी
6. संस्कृत शास्त्रमंजूषा - उदयशंकर झा, चौखम्बा
7. संस्कृत वाङ्मयान्तप्रवेशिका - सोमनाथ दास
8. संस्कृत परम्परागत विषय - शत्रुघ्न त्रिपाठी

# ICT मध्ये शिक्षकस्य भूमिका

**सुजाताराणी दास**

शिक्षाचार्य:, द्वितीयवर्षम्

**शिक्षा** - शिक्षा समाजस्य एका सतत गत्यात्मकी प्रक्रिया वर्तते। मानवान् उत्तमव्यक्तित्वरूपेण निर्मातुं साहाय्यं करोति शिक्षा। व्यक्ते: अन्तर्निहितक्षमतानां, व्यक्तित्वातुं च विकासाय शिक्षा एका प्रक्रियारूपेण परिचिता। संस्कृतेन 'शिक्ष' धातो: शिक्षाशब्द: निष्पद्यते। अस्यार्थ: शिक्षणप्रशिक्षणाधिगम: च। आजीवनं प्रचाल्यमाना प्रक्रिया एव शिक्षा। English Language मध्ये 'Education' इति उच्यते। अस्य शब्दस्य उपरि प्राचीना:, अर्वाचीना:, पाश्चात्याश्च बहव: विद्वांस: स्वस्य मतानि प्रतिपादितवन्त:। तन्मध्यत: एका परिभाषा प्रतिपादिता। यथा–

महात्मागान्धीमहोदय: उक्तवान् यत् - शिक्षा बालकानां सर्वाङ्गीणविकासं करोति।"

अर्थात् बालकानां सर्वाङ्गीणविकासं शिक्षा करोति। परन्तु शिक्षाया: संचालनं, प्रचालनं, निर्देशनं, मार्गदर्शनं च शिक्षक: बालकानां कृते शिक्षया करोति। शिक्षक: कथं शिक्षाया: संचालनं करोति इति? शिक्षक: सम्प्रति: ICT माध्यमेन शिक्षाया: संचालनं करोति इति।

**शिक्षक:** - शिक्षाप्रदानं य: करोति स एव शिक्षक:। शिक्षिका शब्द: शिक्षकस्य स्त्रीलिङ्गरूपं भवति। शिक्ष्" धातुत: संस्कृतेन शिक्षकशब्दस्य निर्माणं भवति। शिष्यस्य मनसि शिक्षणार्थं य: इच्छाशक्तिजागरणे साहाय्यं करोति स एव शिक्षक: शिक्षकेण व्यक्ते: भविष्यं निर्मितं भवेत्। व्यक्तीनां गुणेषु सुपरिवर्तनम् आनेतुं शिक्षक: सक्षम: भवति। प्राचीनभारतीयसमाजे शिक्षकस्य स्थानं भगवत्सदृशम् आसीत्। शिक्षक: सदैव स्वस्य छात्राणां मार्गदर्शनं करोति। शिक्षकस्य स्थानं सर्वश्रेष्ठं वर्तते। शिक्षक: ब्रह्मसदृश: भवति। English भाषायां शिक्षकशब्द: "Teacher" इति उच्यते। यथा–

"A teacher is a person who teches, usually as a job at a school or

similar institution.
T - Terrific / Tolerant / Thoughtfull
E - Energetic
A - Able / Awesome / Amazing
C - Chherful / Caring
H - Hardworking / Helper / Helpful
E - Enthusiastic / Excellent / Encouraging
R - Remarkable / Responsible

शिक्षकस्य English भाषायां काश्चित् परिभाषाः प्रतिपादिताः। यथा-

1. A good teacher is a determind person. (Gilbert hignet)
2. Success is not a good teacher, failure makes you humble. (Shah Rukh Khan)
3. Teaching is a very noble profession that snbapes the character, Caliber and Future of an individual. If the people remember me as a good teacher, that will be the biggest honour for me. (A.P.J. Abdul Kalam)

शिक्षकशब्दस्य पर्यायवाची शब्दः गुरुः अपि भवति। अस्य संस्कृते एकः श्लोकः प्रसिद्धः। यथा -

**दुग्धेन धेतुः कुसुमेन वल्ली**
**शीलेन भार्या कमलेन तोयम्।**
**गुरुं विना भाति न चैव शिष्यः**
**शमेन विद्या नगरी जनेन॥"**

ICT (सूचना एवं सम्प्रेषण तकनीकी)

ICT पूर्ण नाम वर्तते Information & Communication Technology. हिन्द्यां सूचना एवं सम्प्रेषणतकनीकी" इत्युच्यते। ICT सम्प्रति शिक्षाजगतः एका क्रान्तिकारि-आधारशिलाप्रक्रिया वर्तते। ICT द्वारा शिक्षणं रोचकं, सक्रियं, जिज्ञासुपूर्णं भवति। दैनदिनजीवनेऽपि ICT प्रयोगः अधिकाधिकं भवति। ICT प्रयोगः भारते 2004 तमे वर्षे राष्ट्रियमाध्यमिकशिक्षाऽऽभियानद्वारा प्रारम्भो अभवत्।

मनसि उत्पन्नविचाराणाम् आदान-प्रदानप्रक्रिया एव सम्प्रेषणम् इति उच्यते। सम्प्रेषणशब्दस्य उत्पत्तिः लैटिनभाषायाः "Communies" इति शब्दतः अभवत्। मनुष्यः स्वस्य दिनचर्चायाः, विचाराणां, भावानाम् आदानं प्रदानं च सम्प्रेषणेन करोति। अध्यापकः कक्षाशिक्षणे छात्रैः सह अन्तःक्रियां प्रक्रियां सम्प्रेषणेन करोति।

जीस्टमहोदयानुसारेण सम्प्रेषणम् एका सामाजिकप्रक्रिया वर्तते। व्यक्तिः स्वस्य भावानां विचाराणां प्रेषणं प्रतीकरूपेण यया प्रक्रियया सम्प्रेषितं करोति, सैव प्रक्रिया सम्प्रेषणं इति उच्यते।"

हावलैंडमहोदयानुसारेण – व्यक्तेः विशेषात्मकभावानां विचाराणाम् आदानप्रदानं सम्प्रेषणेन भवति। सम्प्रेषितथ्यानाम् आकृतिः प्रकृतिः च शाब्दिकप्रतीकात्मकरूपेण सूच्यते। सा सूचितप्रक्रिया सूचना इति उच्यते।

होलैंडमहादेयानुसारेण – एकस्मिन् समये सर्वेषु क्षेत्रेषु आदानप्रदानार्थं सम्प्रेषणे यदा प्रविधिप्रयोगः भवति। तदा सा प्रक्रिया ICT इत्युच्यते"

**ICT प्रक्रिया -**

सूचनासम्प्रेषणप्रक्रियायाः कैश्चित् प्रकाराः निम्नवर्णिताः। यथा –

1. स्रोतः 2. सन्देशः 3. Encoding 4. माध्यमः 5. Decoding
6. सन्देशग्रहणकर्त्ता 7. पृष्ठपोषणम्।

**ICT मध्ये शिक्षकस्य भूमिका -**

1. शिक्षणप्रक्रियायां शिक्षकस्य भूमिका महत्वपूर्णा वर्तते।
2. ICT उपयोगेन शिक्षणप्रक्रिया रुचिकरी भवति।
3. ICT उपयोगेन शिक्षकः पाठ्ययोजनानिर्माणं कृत्वा अध्ययनं प्रति छात्राणां ध्यानं केन्द्रीकरणं करोति।
4. छात्रान् लक्ष्यप्राप्तये अध्यापकः ICT प्रयोगं कृत्वा अध्ययनप्रक्रियां सरलीकरणं कृत्वा अध्यापयति।
5. ICT द्वारा शिक्षकः स्वस्य अध्यापनं तथा शिक्षणपद्धतिं परिवर्त्य नूतन शिक्षणपद्धतिमाध्यमेन छात्राणां साक्षरताप्राप्तौ सहायतां करोति।
6. शिक्षार्थिनां ज्ञानार्जनहेतुः वातावरणस्य निर्माणे ICT शिक्षकस्य सहायतां करोति।
7. ICT शिक्षणस्य एकम् उपकरणं वर्तते। एतस्य उपकरणस्य माध्यमेन शिक्षकः स्वस्य कक्षाशिक्षणं प्रभाविपूर्णः कर्तुं शक्नोति।
8. शैक्षणिकपद्धतीनां सुदृढीकरणं शिक्षकः ICT उपयोगेन प्रभावीपूर्णं कर्तुं शक्नोति।
9. ICT द्वारा शिक्षकाणां शिक्षणकौशलविकासः भवति।
10. परीक्षणस्य मूल्याङ्कने ICT पद्धतिः शिक्षकस्य सततं साहाय्यं करोति।
11. ICT देशविदेशस्य संगणकसाक्षरतावृद्धिकरणेन सह शिक्षकाणां व्यवसायिकविकासं कर्तुं साहाय्यं करोति।
12. ICT माध्यमेन स्वस्य अधिगमप्रक्रियाविकासेन सह क्षमतायाः, ज्ञानस्य अभिवृद्धिं, कौशलानां विकासम् अध्यापकः करोति।
13. प्रशासनिककार्यनिर्धारणे, प्रस्तुतीकरणे च ICT मध्ये शिक्षकस्य भूमिका महत्त्वपूर्णा वर्तते।
14. शिक्षकः ICT प्रक्रियया संगणकस्याधारेण सूचनानां सम्प्रेषणं झटिति एव कर्तुं शक्नोति।
15. व्यवसायिकविकासः तथा शिक्षकस्य आत्मविश्वासस्य विकासः सम्प्रतिः ICT द्वारा वर्द्धते।
16. शिक्षकाणां विषयज्ञानं ICT उपयोगेन प्रभावितं भवति।

17. ICT द्वारा शिक्षकस्य व्यवसायिकविकासः भवति।
18. छात्राणां क्षमताविकासे अध्यापकः ICT प्रक्रियायाः उपयोगं कक्षायां करोति।

**निष्कर्षः -**

शिक्षायाः विकासः शिक्षकस्य प्रयोगात्मककार्यकौशलानां माध्यमेन भवति। सम्प्रति छात्राणां क्षमतानां, योग्यतानां, कौशलात्मकज्ञानानां विकासाय शिक्षकः सततं प्रचेष्टितो भवति। अतः शिक्षायाः, शिक्षार्थिनां, शिक्षणपद्धतीनां, प्रशासनिककार्यकौशलानां विकासाय शिक्षकः विद्यालयीयस्तरे, महाविद्यालयीयस्तरे, विश्वविद्यालयीयस्तरे तथा सम्पूर्णशिक्षास्तरे ICT प्रक्रियायाः प्रयोगं करोति। ICT माध्यमेन शिक्षकः शिक्षायाः गतिं नवाचारं च प्रति अग्रेसर्तुं साहाय्यं करोति।

# नेतृत्वम्

कुमारी पूनम
शिक्षाचार्य द्वितीयवर्षम्

मानवेषु एतादृशो जनो नूनमेव भवत्येवयस्य मनश्शारीरिकं स्वास्थ्यं सामान्यजनेभ्यः अत्युत्तमं भवति। समानवानां समूहस्य समुदायस्य वा नेतृत्वं स्वीकरोति। नेता तु मानवसमुदायस्य सामाजिकदृष्ट्या सर्वाधिकी व्यवस्थितो भवति। सोऽवगच्छति यत् केन सह व्यवहारः करणीय" इति। नेतृत्वं मनोवैज्ञानिकैः अन्तर्द्वष्टिरूपेण स्वीक्रियते। नेतुः शारीरिकं स्वास्थ्यमपि अत्युत्तमं भवति। कस्मिश्चित्कार्ये स सिद्धहस्तो भवति। सर्वेषां कृते नेतुः व्यवहारो मैत्रीयुतो भवति। सामाजिककार्ये तस्य महती रुचिर्भवति। परेषां हितचिन्तने संलग्नः स भवति। अनवरतं कर्मण्येवरतः स तिष्ठति। प्रायः तस्य सामाजिकस्तरः उच्चतमो भवति। बहिर्मुखिव्यक्तित्वं स धारयति। सामाजिकव्यवस्थायां नेतुः तु नेतुः कार्यक्षमतायाः बोधकं पदं वर्तते। प्रचलित भाषायां कस्यापि राजनैतिकदलस्य सक्रियकार्यकर्त्ता 'नेता' इति मन्यते। यस्य प्रभावः अन्येषां जनानाम् अपेक्षया अत्यधिको भवति। अन्येषां कृते तस्य व्यवहारः आदर्शभूतो भवति।

**नेतृत्वपरिभाषाः**

अतीवव्यापकं वर्तते नेतृत्वपदम्। नितृत्वपदं व्याख्यातुमनेके विद्वांसः प्रयासं कृतवन्तः। तेषां प्रयासाः नेतृत्वपरिभाषासु संरक्षिताः वर्तन्ते तद्यथा-

पिगर्समहोदयानुसारम् -

नेतृत्वं तादृशी अवधारणा वर्तते, या व्यक्तित्वस्य तथा च पर्यावरणस्य सन्दर्भे प्रयुज्यते। अनया तस्य स्थितेः वर्णनं कर्तुं शक्यते। यस्यां व्यक्तित्वेन समानमुद्देश्यमाप्तुम् अन्येषां नियन्त्रणं निर्देशनञ्च क्रियते" इति।

लेपियर-फ्रांसवर्थ इत्यनयोः मतानुसारम् -

नेतृत्वमेतादृशो व्यवहारो वर्तते, येऽन्यषाम् अपेक्षया निजस्य व्यवहारम् अधिकाधिकं प्रभावयति इति।

ब्रिटमहोदयस्य नेतृत्व सन्दर्भे अभिमतम् -

नेतृत्वं परस्परोत्तेजना एका प्रक्रिया वर्तते या कस्यचित सामान्योद्देश्यस्य अन्वेषणे संलग्ना

जनशक्तिं नियन्त्रयति" इति।

**नेतृत्वलक्षणानि**

नेतृत्वलक्षणानि विविधैः मनोविद्भिः निरुपितानि वर्तन्ते। कैश्चन विद्वद्भिः दशलक्षणानि, अष्टादश, अष्टाविंशति वा लक्षणानि निरुपितानि। एतेषु लक्षणेषु विद्वत्सु साम्यमपि वर्तते। तद्यथा–

1. **प्रज्ञा** –

नेतृणां प्रज्ञापरीक्षणेन ज्ञायते यत् नेतुः बुद्धिलब्धिः तस्य अनुयायिजनानां बुद्धिलब्धिभ्यः अत्यधिका भवति। नेता तु स्वस्यानुयायिभ्यः पटुः निपुणश्च भवति। व्यवहारेऽपि नेतुः प्रज्ञागुणः स्फुट एव दृश्यते।

2. **शारीरिकलक्षणम्** –

नेतुरुच्छ्रायः आकृतिः भारश्च सामान्येभ्यो जनेभ्यः अधिकं भवति। एतल्लक्षणस्य अपवादः अपि व्यवहारे दृश्यते। यतोहि सङ्गीतज्ञाः नेतारश्च स्वप्रतिभया एव स्वसमूहस्य नेतृत्वमङ्गी कुर्वन्ति। तेषां भारादिलक्षणं नापेक्षितं भवति। तस्य स्वास्थ्यं तु अत्युत्तमं भवति।

3. **सामाजिकता** –

सामाजिकतायाः नेतृत्वस्य च घनिष्ठः सम्बन्धो भवति। अनेनैव गुणेन नेतारः स्वायुयायिजनानां व्यवहारान् मनोभावान् विचारान् प्रतिक्रियाः कार्याणि च शीघ्रमवगच्छन्ति। तदनुरूपं व्यवहारं ते प्रदर्शयन्ति। सामाजिकता तु नेतृत्वस्य मूलं वर्तते यत्र नेतृत्वस्य आधारशिला तिष्ठति।

4. **आत्मविश्वासः** –

नेता यस्य कार्यस्य आरम्भं करोति तस्य पूर्तये आश्वस्तो भवति। एतद् वर्तते नेतुः महत्त्वयुतं लक्षणम् स्वस्थेन दृढ़ेन च आत्मविश्वासेन स जनेषु विश्वासमुत्पादयति। अनेनैव कारणेन जनास्तस्यानुगमनं कुर्वन्ति।

5. **अन्तर्दृष्टिः** –

नेतुरन्तर्दृष्टिः सुविकसिता भवतिं स जानाति यत् कस्मिन् दृष्टिपूर्णरूपेण साफल्यं कस्मिञ्च ईषद् साफल्यं भविष्यतीति। अन्तर्दृष्टिमाध्यमेन कार्याणां रूपरेखायाः निर्माणं कर्त्तृं प्रभुः भवति। अनेनैव स विविधाः समस्याः परीक्षयति, तासां गुणदोषान् च विवेचयति।

6. **नमनीयत्वम्** –

परिवर्तनं हि प्रकृतेः नियमः। समसस्य प्रवाहेण समस्यासु परिवर्तनं जायत एव। नेतुर्व्यवहारः परिवर्तनकारणात् नमनीयः स्यात्। परिवर्तनमेतत् समयानुरूपमपेक्षितं भवति, न तु सर्वदा। नमनीयतानां अभावे स्वानुयायिनां विश्वासमाप्तुं न भवति प्रभुः।

7. **परिश्रमी दृढ़प्रतिश्च** –

नूनमेव परिश्रमी भवति नेता। यो नेता स्वानुयायिभिः सह कठोरं परिश्रमं करोति। स सर्वाधिको लोकप्रियो भवति। स एव अन्यान् परिश्रमाय प्रेरयितुं शक्तो भवति। नेता दृढ़प्रतिज्ञोऽपि भवति। स्वसिद्धान्तानां दृढ़तया परिपालनं कर्तुं ससर्वदा उद्यतो भवति। न्याय्यात्पथः प्रविचलन्ति पदं न धीराः" इति सिद्धान्तं परिपालयति।

वस्तुत: ये गुणा: भवन्ति व्यक्तित्वस्य, तान् सर्वानेव यो विभति। स एव नेतृरूपेण स्वीक्रियते। एते गुणा: नेतृत्वे सहायक भूता: वर्तन्ते। नेतु: मौलिका: विशेषता: भवन्ति। याभि: अनुगामिजना: समये-समये प्रभाविता: भवन्ति।

शिक्षकस्य नेतृत्वप्रारूपम्

शिक्षक: छात्राणां समूहस्य स्वीकृतो नेता वर्तते। स स्वस्य ज्ञानेन, योग्यतया, शक्त्या बुद्धया च छात्राणां नेतृत्वरूपेण स्वीक्रियते। तस्य अनुगामिनां छात्राणां कृते व्यवहार आदर्शभूतो भवति। अनेनैव कारणेन नेतृरूपेण स सुस्थापितो भवति कक्षायाम्। स्वायुयायिनश्च्छात्रान् प्रति समर्पणभावनया परिपूरित: स भवति, यया छात्रा: अपि स्वनेतारं शिक्षकं प्रति सर्वदा समर्पिता: भवन्ति। शिक्षक: नेतृत्वप्रशिक्षणार्थं स्वकीयं व्यवहारं उपरथापयति आदर्शभूतम्।

शिक्षक: कस्यापि बटनाया: कृते सर्वदा सन्नद्धो भवति येन असावधानतया कापि विषमा परिस्थितिरुत्पन्ना न जायेत्। उत्पन्ने सति विषमायां परिस्थितौ स मनोवैज्ञानिक दृष्ट्या तस्या समाधानस्य प्रयासं करोति। समयेऽस्मिन् स न भवत्याकुलित: असन्तुष्टश्च। परिस्थिते: प्रत्यक्षीकरणे सोऽतीव दक्षो भवति। अध्यापको बालकेभ्य: साहाय्यं सर्वदा स्वीकरोति। स: छात्रेभ्य: साहचर्यं प्रकटयन्नापि अनुशासितान् प्रति कठोरो भवति।

ये छात्रा: नेतृत्वगुण सम्पन्ना: वर्तन्ते, तेषां कृते एतदर्थम् अवसरा: अध्यापकेन प्रदेया:। अवसरानुरूपं शिक्षको अनुयायिरूपणापि व्यवहरति कक्षायाम्। नेतृत्वक्षमताया: हस्तान्तरणं शिक्षकेण करणीयं भवति।

नूतनकार्यसन्दर्भे छात्राणां प्रस्तावा: शिक्षकेण स्वीकार्या:, तासां संस्तुतीनां स्वागतं कुर्यात् शिक्षक:। ये प्रस्तावा: शैक्षणिको देश्यपूर्तये लाभप्रदा: वर्तन्ते तदनुरूपं शिक्षकस्य व्यवहारोऽपि भवेत्।

छात्राणां सहभागप्रवृतीनां विकासाय शिक्षकोऽवसायन् दद्यात् कक्षायाम्। येषां शिक्षणेतरक्रियायां रुचि: दक्षत्वं च वर्तते, तेषां कृते तदनुरूपान् नेतृत्वावसरान् उत्पादयेत् शिक्षक:। नेतृत्वं तु तदैव सफलं भवति यत्र अनुगामिजना: भवन्ति। अत: सहभागप्रवृत्ते: विकासेन नेतृत्व शक्ते: विकासाय उद्यम: अपेक्ष्यते। कक्ष्याया: सर्वा: क्रिया: सामूहिकरूपेण सम्पादनीया: शिक्षकेन।

नेतृत्वे जनानां पारस्परिका: सम्बन्धा: वर्तन्ते निहिता:। सम्बन्धानां प्रत्येकं स्थितिर्भवति अद्वितीया। शिक्षक: कदापि इदं नावगच्छेत् यत्, य एव वर्तते नेता कक्षाया:, न कोऽप्यन्य: नेता भवितुमर्हति। अनेन छात्रा: भवन्त्यात्मकेन्द्रिता शिक्षकास्तु नूनमेव कक्ष्यायां पारस्परिकसम्बन्ध
ान् स्थापयेयु:।

# पाठ्यचर्या

**केशव नाथ झा**
शिक्षाचार्य द्वितीयवर्षम्

पाठ्यचर्या विद्यालयस्य शिक्षाव्यवस्थायाश्च केन्द्रविन्दुरस्ति। विद्यालये उपलब्धानि संसाध नानि पाठ्यचर्यायामेवागच्छन्ति। यथा विद्यालयभवनम्, उपकरणानि, पुस्कालयस्य पुस्तकानि तथा च अन्यशिक्षणसामग्रीषामेकमात्रमुद्देश्यं यत् पाठ्यचर्यायाः क्रियान्वयने सहयोगप्रदानम्।[1]

कक्षायाः सर्वाः क्रियाः, पाठ्ययसहगामिकार्यकलापं तथा मूल्याङ्कनस्य सर्वाः प्रक्रियाः विद्यालयपाठ्यचर्यायाः परिणामस्वरूपेणैव नियोजिताः भवन्ति।

प्रत्येकं सभ्यसमाजः स्वस्य यूनां समाजीकरणाय एकस्य निश्चितस्य शैक्षिककार्यक्रमस्य नियोजनं करोति। यस्य क्रियान्वयनं विद्यालयमाध्यमेन क्रियते। अस्यां प्रक्रियायां कस्याः वार्तायाः समावेशो भवेत्। तथा तेषां शैक्षिकव्यवहारः क्रियायाः स्वरूपे केन प्रकारेण परिवर्तितं भवितुमर्हति। इत्यस्मिन् विषये बहु मतान्तरमस्ति।

प्रसिद्धाः दार्शनिकाः अरस्तुमहोदयाः उक्तवन्तः" - याः स्थित्यः सन्ति, मानवसमाजः एतेषां शिक्षणं प्रति न हि मतैक्यमस्ति। न हि शिक्षणाय स्वीकृतं यत् साधनं तं प्रति एव।

पाठ्यचर्या (Curriculum) इति शब्दस्य प्रयोगः नैकेषु रूपेषु कृतवन्तः। सामान्यरूपेणास्य आशयोऽयं यत्-

- विद्यालये अध्ययनाय निर्दिष्टं पाठ्यक्रमम् एवं अन्यसहायकग्रन्थाः ।
- छात्रान् पाठनाय विषयसामग्रयः।
- कस्यापि विद्यालये निर्दिष्टस्य विषयस्य पाठ्यक्रमः।
- विद्यालये छात्रान् दीयमानं नियोजितम् अधिगमम् अनुभवानां सम्मिलितरूपम्।

जॉनसनमहोदयानुसारम् (1967) अस्याः परिभाषायाः अनुसारं पाठ्यचर्यायाम् अधिगमस्य परिणामः महत्त्वपूर्णो न तु अधिगमस्य अनुभवः। एते परिणामाः उद्दश्येन सम्बन्धितं भवति।।

पाठ्यचर्या एकः एतादृशाः प्रयासः अस्ति। येन शैक्षिकसङ्कल्पनायाः आवश्यकसिद्धान्तं तथा लक्षणं येन प्रकारेण सम्प्रेषितं क्रियते यत् तस्य उपयुक्ता समालोचन कुर्वन् तस्य प्रभावशालीरूपेण कार्यरूपे परिणतं कर्तुं शक्यते।

पाठ्ययर्चायाः विशेषताः (Featuring Curriculum) पाठ्यचर्यायाः सङ्कल्पना इत्यस्य प्रमुखपक्षाणां तथा विशेषतानां सम्यक्तया अवबोधम् आवश्यकं भवति। यत् निम्नलिखितम् अस्ति।।

पाठ्यचर्या सदैव नियोजितं भवति। अस्यां निहितक्रियायाम् आवश्यकतानुसारं तत्क्षणं विकसितं नैव कर्त्तुं शक्यते।

**पाठ्यचर्यायाः चत्वारः मुख्याधाराः -**

(1) सामाजिकशक्त्यः।

(2) मानवीयकविकासानां ज्ञानम्।
(3) अधिगमस्य स्वरूपम्।
(4) ज्ञानस्य सज्ञानस्य च स्वरूपम्।

पाठ्यचर्यायाः लक्ष्यं/प्रयोजनं तेन सह सम्बन्धितं शैक्षिकोद्देश्येन निर्दिष्टं भवति। उद्देश्यमेव साध्यमस्ति। पादाचर्या अध्यापकस्य अनुदेशनं नियोजितकरणे सहायकं भवति।
पाठ्ययचर्यायाः आधारः (based curriculum) पाठ्यचर्यायाः चत्वारः मुख्यधाराः सन्तिः मानिवविकासस्य स्थितिः।

सामाजिकशक्त्यः (Social powers) कस्मिन्नपि समाजे सामाजिकशक्त्यः विद्यालयस्य कार्यकलापं प्रत्यक्षरूपेणायवा अप्रत्यक्षरूपेण प्रभावितं करोति। एताः शक्त्यः सामाजिकलक्ष्यं, सांस्कृतिकैकता, विभेदः, सामाजिकप्रभावः, सामाजिकपरिवर्त्तनम्, भविष्ययोजना, तथा संस्कृतेः सङ्कल्पनारूपेण दर्शनं ददाति। अस्माकं देशः अनेकानां संस्कृतिनां समागमोऽस्ति, तथा च अस्य प्राचीनेतिहासोऽस्ति। अस्मिन् सामाजिकशक्त्यः अत्यन्तं जटिलं विविधरूपे दर्शनं ददाति। एताः सामाजिकशक्त्यः एव शिक्षायाः सामाजिककार्यकलापस्य निर्धारणं करोति।

'मानवविकासः' (human development) बालकस्य वृद्धेः तथा विकासस्य विविधपक्षाणां पूर्तौ समाजेन सह एव विद्यालये निर्धारितपाठ्यचर्यायाः अपि योगदानं भवति। विंशतिशताब्द्यां विकासस्य अध्ययनं तथा तत्सम्बन्धिशोधेन बालानां विकासस्य स्थिताः। तस्य चिन्तनप्रक्रिया, आवश्कतानाम् अभिरूचिनां प्रति नवीनशैल्या चिन्तनस्य शक्तिः अमिलत्। बालाः उन्नतः अथवा दीर्घः रूपं न भवति। ते प्रौढापेक्षया नैकप्रकारकैः भिन्नाः भवन्ति। विकासात्मकावस्थायां अन्तरं केवलं मात्रात्मकम् एव न गुणात्मकमपि भवति। अस्य अन्तरस्य अनेके मनोवैज्ञानिकाः विस्तारपूर्वकं अवबोधितवान्। मानवविकासस्य ज्ञानं पाठ्यचर्याविकासः अध्यापकस्य सहाय्यं करोति। अनेन प्रकारंण विकसितपाठ्यचर्या प्रत्येकभ्योः बालानां विकासात्मकावस्थानुसारं तस्य विशेषतां ध्यानं दत्त्वा निर्माणं भवति।

**अधिगमस्य स्वरूपम्** (the nature of learning)

विंशतिशताब्द्याः प्रारम्भात् एव मानवः अधिगमस्य प्रक्रियायां विचारः करोति। अस्मिन् क्षेत्रे नौके शोधाः अपि भवन्तः सन्ति। अनया दृष्ट्या अधिगमस्य केचन सिद्धान्तः विकसितं कृतवान्। यस्मिन् प्रमुखाः सन्ति - व्यवहारवादीसिद्धान्तः तथा सज्ञानात्मकसिद्धान्तः। अधिगमसिद्धान्तस्य पाठ्यचर्यायाः नियोजनस्य कार्यं विभिन्नदृष्टिकोणेन सम्पादितं भवति।

**ज्ञानसंज्ञानयोः स्वरूपम्** (the nature of knowledge cognizance)

पाठ्यचर्यायाः एकः अन्यः आधारः - ज्ञानस्य तथा संज्ञानास्य स्वरूपम्।

सूचनायां ज्ञानं च किमन्तरम्, बालकः सूचनां ज्ञाने केन प्रकारेण परिवर्त्तनम्, किं ज्ञानमधिकमुपादेयं वर्तते।

विचारः प्रक्रियायाः किं स्वरूपम्।

विविधविचारप्रक्रियाः संज्ञानात्मकप्रक्रियायाः कौशलं परस्परं केन प्रकारेण सम्बन्धितं भवति।

एतेषां प्रश्नानामुत्तरं ज्ञानानां संघटितकरणे सहायकं भवितुमर्हति। अत्र एतत् सिद्धं यत् प्रत्येकं छात्रः स्वविशिष्टाधिगमशैलि तथा युक्तिनां प्रयोगं करोति।

पाठ्यचर्या-विकासयो उपागमः (Approach to curriculum development)

विषयकेन्द्रितः उपागमः (topics centered approach)

विषयकेन्द्रितोपागमः अनुभवानां संघटनाय अधिकतमः यः प्रयोगः भवति। तेषु एकः उपागमः। अस्मिन् उपागमे विषयवस्तु परितः अधिगमस्य अनुभवानां सघटनं क्रियते।

शैक्षिकोद्देश्यानां प्राप्तये विषयवस्तुनि प्रवीणता एव मूलाधारोऽस्ति।

- ◆ विषयकेन्दितपाठ्यचर्यायां पाठ्यचर्या योजनकारस्य मुख्यदायित्वमति यत् ते विद्यालयेन स्वीकृतानां विषयाणां निर्धारणं क्रीयेत् तथा च निर्णयं कुर्वन्तु यत् प्रत्येकस्य वस्तोः अन्तर्गते किं किम् आगमिष्यति।
- ◆ उदाहरणाय तानि विषयवस्तुनि वा पाठ्यसामग्रीम् अध्ययनस्य विभिन्नानि क्षेत्राणि - यथा - हिन्दी, आङ्गलम्, विज्ञानम्, सामाजिकविज्ञानम्" गणितम् इत्यादयः।
- ◆ पाठ्यचर्या योजनायां सन्नद्धाः ये जनाः सन्ति तेषां दायित्वमस्ति यत् ते छात्राणां विषयगतयोग्यतापरीक्षणाय औपचारिकपरीक्षणेन समस्यासमाधानपरिस्थित्या मूल्याङ्कनस्य युक्तिं प्रदशयेत्।
- ◆ विस्तृतक्षेत्रोपागमः" (wide are approach)
- ◆ विस्तृतक्षेत्रोपागमः पारम्परिकविषयस्य अभिप्रायस्य (डिजायन) परिवर्तनं रूपम्।
- ◆ एषः उपागमः अध्ययनस्य सम्पूर्णक्षेत्रेण सम्बद्धं ज्ञानं बोधं एकः व्यापकः विषयवस्तुसङ्घटने आनयनस्य प्रायासं करोति।
- ◆ अस्मिन् उपागमे सामान्यविषयानां विषयवस्तूनां समाकलितं करणस्य प्रयासः क्रियते। उदाहरणाय जीवविज्ञानस्य विस्तृतं क्षेत्रम् उपागमे सामान्यविषयाणां विषयवस्तु समाकलितकरणस्य प्रयासः क्रियते।
- ◆ सामाजिक-समस्या-उपागमः (social problem approach)
- ◆ अस्य उपागमस्य समर्थकाः स्वीक्रीयन्ते यत् व्यक्तेः अधिगमः अनुभवश्च तस्य संस्कृतेः वातावरणस्य क्रियाकलापोपरि आधारितं भवेत्। यस्मिन् सः तिष्ठति।
- ◆ अनेन छात्रेषु सामाजिकस्य पक्षाणां समस्यानां सम्बन्धे चेतना आगच्छति। तथा च तस्य प्रभावीरूपेण समाधानस्य योग्यता उत्पन्नो भवति।
- ◆ सामाजिकसमस्या-उपागममाध्यमेन समस्यायाः अथवा पक्षाणां विश्लेषणस्य पश्चात् अधिगमोद्देश्यानि निर्धार्यते। समस्यया सम्बद्धं कस्यापि स्रोतेन विषयवस्तु नेतु शक्नुमः।
- ◆ अध्येता केन्द्रितोपागमः (student centered approach)

अधिगमः एका एतादृशी प्रक्रिया अस्ति। यस्मिन् वयं अनुभवेन स्वव्यवहारे परिवर्तनं क्रियते। वयं सर्वस्मात् तीव्रः तेन परिस्थित्या अवबोध्यते। येन वयं समस्या समाधाने सहायता मेलिष्यति। येन स्वेच्छायाः प्रपूर्यति। येन वयं स्व रुचिं अपेक्षां प्रपूर्यति।

पाठ्ययचर्याविकासस्य एतस्मिन् उपागमे विद्यालयानुभवेन छात्रान् एतादृशीं विधिं अवबोधनस्य

प्रयासः क्रियते। यत् एकः प्रभावीनागरिकसमस्यासमाधानं स्वरुचिं प्रपूत्यर्थं उपयोगे आनयति। एतस्य प्रकारस्य पाठ्यचर्यायोजना छात्राणां वर्तमानजीवनस्य आवश्यकतायामाधारितं भविष्यति।

**श्रोतसन्दर्भग्रन्थसूची -**


(1) यूनियनपीडियन संचार ।।अथवेव विश्वकोष।।

(2) विकीपिडीया

(3) अरिहन्त के बुक

(4) एजुकेशन मिरर


# अधिगमानुभवानां चयने अवधेयांशाः


**सोनिया साहु**

शिक्षाचार्य


**अधिगमानुभवस्यार्थः -**

छात्रः शैक्षणिकपरिस्थित्यां स्व प्रतिक्रियया अनुभवं प्राप्नोति। अनुभवेन अधिगमः जायते। अर्थात् नियन्त्रितपरिस्थित्या छात्रः स्वयम् अनुक्रिया कृत्वा अन्तः क्रियया यत् प्राप्नोति तदेव अधिगमानुभवः। अधिगमानुभवेन छात्राणां व्यवहारपरिवर्तनं भवति। अस्मिन् व्यवहारपरिर्वतने ज्ञानात्मकक्षः, भावनात्मकपक्षः, क्रियात्मकपक्षाश्च सम्मिलितानि भवन्ति।

**अधिगमानुभवस्य त्रीणि अङ्गानि -**

(1) चयनिताधिगमपरिस्थितिः।

(2) अधिगमगतिविधयः।

(3) अन्तःक्रिया।

अधिगमानुभवानां सृजनम्-

अधिगमानुभवानां सृजनमुपलब्धसाधनानुगुणं क्रियते। किन्तु साधनानां व्यवस्थायां रूपरेखा शिक्षकस्य योग्यतां उपरि निर्भर करोति।

अधिगमानुभवानां सृजने बालकान् उद्देश्यप्राप्तौ सहाय्य मिलति।

शैक्षिकोद्देश्येन पाठ्यवस्तुना च अधिगमानुभवः नियन्त्रितं भवति।

उपयुक्ताधिगमानुभवेन शिक्षणं प्रभावशाली भवति।

छात्राणां स्वस्य क्रियाः अधिगमाय क्रियाणां अधिकोपयोगी भवति।

शिक्षकण प्रभावात्मकं शिक्षणाधिगमाय सोद्देश्यक्रियाणां व्यवस्था करणीया।

उपयुक्ताधिगमानुभवानां सृजनम्-

उपयुक्ताधिगमानुभवः निर्धारितोद्देश्यानां प्राप्तौ सहाय्यं भवेत्, अतः निम्नलिखितगुणाः अधि गमानुभवे भवेयुः यथा-

(1) सार्थकम्।

(2) सतत-अन्तःक्रिया आधारितम्।

(3) समन्वितञ्च।

अधिगमानुभवानां चयनस्य सिद्धान्तौ-

(1) एकमेवाधिगमानुभवेन नैका: अनुभव: प्रदातुं शक्यते।

(2) भावात्मकपक्ष: ज्ञानात्मकपक्षेण नियन्त्रितं भवति।

अधिगमानुभवचयनसम्बद्धावश्यका: निर्देशा: -

(1) प्रत्यक्षेषु परोक्षेषु च प्राप्तानुभवासरेषु सन्तुलनं स्थापनम्।

(2) प्रत्यक्ष-परोक्षञ्चोभयविधाधिगमानुभवानां समालोचनात्मकाय विश्लेषणाय उपयुक्तावरणामुपलब्धि:।

(3) विभिन्नोद्देश्यानां पूर्तये विभिन्नामधिगमानुभवानां चयने समुचितनिर्णय:।

(4) भावात्मकविकासाय अधिगमानुभावानां चयनं करणीयम्।

(5) अधिगमानुभवेन एकस्मिन्नेव समये नैकानामुद्देश्यानां प्राप्ति: भवेत्।

(6) अधिगमोनुभव: उद्देश्येन सह सम्बद्ध: स्यात्।

(7) अधिगमानुभव: विद्यार्थिनां कृते सार्थकं सन्तोषप्रदञ्च स्यात्।

(8) अधिगमानुभव: छात्राणां परिपक्वतानुगुणं स्यात्।

ब्लुममहोदयस्य शिक्षा प्रक्रिया -

(1) शैक्षिकोद्देश्यानां निर्धारणम्



(2) अधिगमानुभव: (3) व्यवहारपरिवर्तनम्

**अधिगमानुभवानां चयनस्य मानदण्डा: -**

बर्तनमहोदयेन प्रस्तावितषट्मानदण्डा: -

(1) विद्यार्थीदृष्ट्या सोद्देश्यं भवेत्।

(2) शिक्षकदृष्ट्या वांछनीय सामाजिकोद्देश्यानां प्राप्तये सक्षम: भवेत्।

(3) अधिगमानुभव: परिपक्वतानुगुणं भवेत्।

(4) विद्यार्थीना सन्तुलितविकासाय विभिन्नक्रियाणां समावेश: भवेत्।

(5) अधिगमानुभवानामायोजनं विद्यालये समाजे च उपलब्धं सौविध्यनुगुणं करणीयम्।

(6) अधिगमानुभवे व्यक्तिगतभिन्नता दृष्ट्या विविधता स्यात्। अर्थात् कक्षाया:, उत्तम:, मध्यम:, निम्न: प्रत्येकस्य स्तरस्य छात्रेभ्य: उपयोगि स्यात्।

**सारांश: -**

शैक्षिकप्रक्रियायामुद्देश्यानां निर्धारणानन्तरं द्वितीयसोपाने अधिगमानुभवानां चयनमागच्छति। येन छात्राणां व्यवहारे परिवर्तनं क्रियते। छात्र: अनुभवेन अधिगच्छति। अत: अधिगमानुभव: शैक्षिकोद्देश्यानां प्राप्ते: साधनं वर्तते।

सन्दर्भाः –
(1) शर्मा, आर.ए. 2013, पाठ्यक्रम विकास एवं अनुदेशन; मेरठः आर. लाला बुक् डिपो।
(2) यादव, सियाराम, पाठ्यक्रम विकास; आगराः विनोद पुस्तक मन्दिर।
(3) पाल हंसराज, पाल राजेन्द्र; 2009, पाठ्यचर्या कल आज और कल; दिल्लीः शिक्षाप्रकाशन।
(4) पाठक, आर.पी., पाण्डेय भारद्वाज, अमिता; 2012, पाठ्यचर्या निर्देशन एवं तुलनात्मकशिक्षा का आधार; नई दिल्लीः कनिष्क पब्लिशर्स।

# शिक्षायां मूल्याङ्कनम्

**शिवनारायण त्रिपाठी**
शिक्षाचार्य प्रथमवर्षम्

**मूल्याङ्कनं मापनं च –**

एकः छात्रः आंग्लभाषायां पञ्चाशदधिकद्विशतपदानि जानाति तस्य पदस्वाधीन मापनीयं चेत् तेन सह बहूनि कार्याणि अपि ज्ञातत्यानि भवन्ति।

तस्मिन् छात्रः स्तरानुगुणं वयानुगुणं कियत् पदानि जानाति यदि छात्रः अस्मिन् समये चतुश्शतं पदानि पठनीयानि सन्ति उद्देश्यानुगुणम् इति चेत् पूर्वोक्तपदसंख्या तृप्तकरी न भवति।

कारणं तु उद्देश्यप्राप्तिः सम्पूर्णत्वेन न जानाति। पदानां संख्या तु उद्देश्यमेव एकमेव भवति।

किन्तु वयोनुगुणं यदि पञ्चाशदधिकद्विशत पदानि एव पाठनीयानि इति उद्देश्यं अभविष्यत् चेत् तर्हि तस्य उद्देश्या प्राप्तिरपि शतप्रतिशतं इति वक्तुं शक्यते।

तदन्तरा एकैकस्य पदस्य प्रत्येक-प्रत्येक पठनोद्देश्यमपि गणनीयम्।

**मूल्याङ्कनस्य अर्थः निर्वचनञ्च –**

शोधकम् (TEST) मापनं (Measurement) मूल्यनिर्णयः इत्यादीनि पदानि परस्परपूरकत्त्वरूपेण उपयुज्यते। किन्तु एतानि सर्वाणि अर्थः व्याप्तौ भेदः। एतेषां समेषां पदानाम् अर्थव्याप्तौ अपि समानताः भवन्ति च।

शोधकम् (TEST) एकस्य व्यवहारस्य मापनाय उपयुज्यमानं उपकरणं वर्तते शोधकम् इति ग्रोण्लण्ट (1985) (Gronlent) महाशयः अभिप्रैति।

उत्तर्ममाणाः प्रश्नावल्यः एव भवति शोधकं।

अनेन एकस्य प्रत्येकं व्यक्तेः व्यवहारमेव मापयितुं शक्यते। मापनमूल्यनिर्णयोः अपेक्षया व्यापितः अतीव न्यूना भवति शोधाकस्य।

**मापनम् (Measurement)** – एकस्य वस्तुनः परिमाण्यमाग भवति प्रक्रिया भवति मापनम्। एकस्य प्रत्येकस्य व्यवहारपरिवर्तनस्य परिमाणं संख्यारूपेण प्रतिनिधानमेव अनेन उद्दिश्यते।

शोधकमपेक्षया बृहत्सङ्कल्पमेव मापनम्। बहूनां उपकरणानां सहाय्येन मापनं कर्तुं शक्यते। मापनाय उपयुज्यमानं एकं उपकरणं भवति शोधकम्।

**मूल्याङ्कनम्** - मापनात् अपेक्षया कक्ष्याप्रवर्तनमूल्यनिर्णस्य अत्यधिकं योगदानं वरीवर्ति। विद्याभ्याससमापनस्य सविशेषताः इत्यस्मिन् पुस्तके एवत् फीस्बी 1986 एवं अभिप्रैति शोधकं मापनस्य एकमुपघटत्त्वेन तथा मापनं मूल्यनिर्णयस्य प्रस्तावनात्वेन स्वीकर्तुं शक्यते।

शैक्षिकलक्ष्याणां पूर्तीकरणं कियत्परं सम्भूतमिति अवगन्तुमेकमुपकरणं भवति। Ralt Tailor (1950) अभिप्रैति Stopil Beam (1927) मतानुसारं मूल्यनिर्णः एकमुपकरणं भवति यत् शैक्षिकलक्ष्याणां तथा पठनानुभवानां फलप्राप्तिनिर्णयाय। (मूल्यनिर्णयः शिक्षायां (1963)

**मापनमूल्याङ्कनयोः सविशेषता** - शिक्षायाः ऊर्ध्वगतेः परिणामः मापनप्रक्रियायाः आधारेणैव सम्भवति। शैक्षिक घटकाः पठितारः, अध्यापकः, रक्षितारः, भरणकर्तारः, एतेषां सर्वेषां कृते उपयोगप्रदमेव भवति मूल्यनिर्णयः।

मूल्यनिर्णयस्याधारेणैव अध्यापकः पाठासूत्रणं सज्जीकरोति।

छात्राणांपूर्वज्ञानं व्यक्तिभेदं परिगणत्य, पठनानुभवस्य चयनमपि मूल्यनिर्णस्याधारेण भवति।

मूल्यनिर्णयस्याधारेण बोधनप्रक्रियायां परिणामं आनयति प्रचाल्यमानशैक्षिकसम्प्रदानस्य फलप्राप्तिं ज्ञात्त्वा तदनुगुणं शैक्षिकसम्प्रदाये कालानुगुणं परिवर्तमानेतुं भरणकर्तृणा कृते सहायकोपकरणं भवति।

मूल्यनिर्णयः छात्राणां पठनप्रतिपुष्टेः प्राप्त्यर्वं तथा रक्षकर्तृणां कृते छात्राणां भाविनिकालस्य निर्णयाय च मूल्यनिर्णयः एकमुपाधिः भवति।

**मूल्याङ्कनस्य विशेषता** -

- विद्याभ्यासस्य विविधघट्टेजायमानस्य गुणवत्तां निर्णयति।
- अनुस्यूताप्रक्रिया भवति इयम्।
- पठितुः अपेक्षा तथा व्यक्तिभेदः च परिगण्यते।
- अस्मिन् तु शिक्षायाः विविधमेघलां अन्तर्भवति।
- शिक्षायाः फलप्राप्तेः प्रगत्यर्थम् काश्चन् उपाधिः भवति।
- Bendremin S bloom - महाशयस्यामतानुसारं मूल्यनिर्णयः तावत् अधः दीयते-
- छात्राणां दक्षता तथा बलहीनता च ज्ञातुं एकोत्तमोपाय भवति अयम्।
- शैक्षिकमण्डले उत्तममार्गस्य स्वीकरणाय।
- पठनप्रवर्तनस्य लक्ष्यान् मापनेन सह बध्नातुम्।

# शैक्षिकानुसन्धानम्

**नीलेश शर्मा**
शिक्षाचार्य प्रथमवर्षम्

**शैक्षिकानुसंधानस्य इतिहासः** – भारते शैक्षिकानुसन्धानं न प्राचीनम्। इदानीमपि भारते शैक्षिकानुसंधानं बाल्यावस्थायमिव विद्यते। एतादृशः विचारः शिक्षाऽऽयोगेन 1964 तमे वर्षे प्रकटितः। परन्तु इदानीं भारतेऽपि शैक्षिकम् अनुसंधानं शैशवावस्थायां नास्ति। स्वतंत्रतायाः पञ्चादशवर्षेषु अस्मिन् क्षेत्रेऽपि महती प्रगतिः जाता। देशस्थशैक्षिकानुसंधानस्य विकासः शिक्षाऽऽयोगेन (1964-66) निम्नलिखितः मन्तव्याः प्रकटिता – यदि साम्प्रतिक- शैक्षिकव्यवस्थासुं परिवर्तनमपेक्षितञ्येत् शैक्षिकानुसंधानस्य विकासाय प्रयासः करणीयः तथा शैक्षिक-नीति- निर्धारणे शिक्षायाः परिष्काराय च अस्य प्रयोगः कर्त्तव्यः" इति।

**शैक्षिकानुसंधानस्य परिभाषाः** –

**गुड्समहोदयानुसारेण** – शैक्षिकानुसंधानम् नाम शिक्षाक्षेत्रे शैक्षिकसमस्याम् आश्रित्य क्रियमाण अध्ययनम् अन्वेषणञ्चेति।"

**हेमनुजनियर महोदयानुसारम्** – शैक्षिकानुसंधानं नाम व्यवहारविज्ञानस्य एकम् अङ्गम् इति। अनेन मानवीयव्यवहारस्य ज्ञानं तस्य व्याख्या एवम् ऊहनं च क्रियते क्वचित्तु इदं तस्य नियन्त्रणमपि करोति।"

**J.W. Best महोदयानुसारम्** – अनुसंधानप्रक्रियायां सम्बद्ध साहित्यस्याध्ययनं प्रथमसोपानत्वने स्वीकर्तुं शक्यते। समस्यायाः निर्देशने सम्बद्धसाहित्यस्याध्ययनं महदुपकरोति इति" एतेषां महाभागानां अभिप्रायः।

**शैक्षिकानुसंधानस्योद्देश्यानिः** –

शैक्षिकानुसंधानस्य समस्यायां विविधता परिदृश्यते। अतः अस्य प्रमुखानि चत्वारि उद्देश्यानि सन्ति तानि –

1. **सैद्धान्तिकम्** – शैक्षिकानुसन्धाने शोधकार्यैः नूतनसिद्धान्तानां नियनामानां च प्रतिपादनं भवति। शोधकार्यं व्याख्यात्मकं भवति। अस्यान्तर्गते सहसम्बन्धानां व्याख्या क्रियते। येन शिक्षा प्रक्रिया प्रभावशालिनी भवितुमहर्ति।

2. **तथ्यात्मकम्** – शिक्षायाम् ऐतिहासिक-शोधकार्येण नूतनतथ्यानामन्वेषणं क्रियते। एतदाधारेण वर्तमानम् अवगन्तुं सहायता मिलति। एतादृशानाम् उद्देश्यानां प्रकृतिः वर्णनात्मिका भवति। यतोहि तथ्यानि अन्विष्य घटनानां वर्णनम् क्रियते।

3. **सत्यात्मकम्** – दार्शनिक-शोधकार्येण नवीन सत्यप्रतिस्थापनं क्रियते। दार्शनिक शोध कार्यद्वारा शिक्षायाः उद्देश्यानां, सिद्धान्तानां, शिक्षणविधीनां, पाठ्यक्रमाणां च रचना क्रियते। उद्देश्ये अस्मिन् अनुभवानां चिन्तनम् बौद्धिकस्तरे क्रियते।
येन नवीनतथ्यानां मूल्यानाञ्च प्रतिस्थापनं जायते।

4. **व्यावहारिकोद्देश्यम्** - शैक्षिकानुसंधानस्य निष्कर्षाणां व्यावहारिक प्रयोगो भवेतम्। परन्तु केषुचित् शोधकार्येषु केवलम् उपयोगितायाः उपरि महत्वं प्रदीयते। तेन ज्ञानस्य क्षेत्रात् योगदानं न लभते। इदं विकासात्मकम् अनुसन्धानम् इत्यपिक कथ्यते।

क्रियात्मकानुसंधानेन शिक्षा प्रक्रियायां संशोधनं विकासश्च क्रियेते। अतः अस्योद्देश्यं व्यवहारिकं भवति।

**शैक्षिकानुसंधानस्य प्रकाराः -**

1. मौलिकानुसंधानम्
2. व्यावहारिकानुसंधानम्
3. क्रियात्मकानुसंधानम्

**शैक्षिकानुसंधानस्य सोपानानि -**

शैक्षिकानुसन्धानप्रक्रियायां षट्सोपनानि स्वीकृतानि तानि यथा -

1. समस्यायाः चयनम्।
2. प्राक्कल्पनायाः प्रतिपादनम्।
3. शोधस्य रूपरेखानिर्माणम्।
4. प्रदप्तानां सङ्कलनम्।
5. प्रदप्तानां विश्लेषणम्।
6. सामान्यीकरणं तथा निष्कर्षप्रतिपादनम्।

# संस्कृतं राष्ट्रभाषा स्यात्

**भास्कर पाणिग्राही**

शिक्षाशास्त्री द्वितीयवर्षम्

कस्याऽपि भाषायाः महत्वं तद्भाषाभाषिणां संख्यामाश्रित्य एव तिष्ठति। एतत् सत्यं यत् साम्प्रतिकं भारतवर्षं तदेव पुरातनं आर्यावर्त्तः वर्त्तते। अत्र निवासिनः आर्याः, येषाम् आद्या संस्कृतिः वैदिकसंस्कृतिः आसीत्, यतोहि तदानीन्तनाः जनाः संस्कृतभाषाभाषिणः आसन्। तदानीं ब्राह्मणक्षत्रियादिनां भाषा संस्कृतभाषा एव आसीत्। पण्डिताः स्त्रीयः अपि संस्कृतज्ञाः भवन्ति स्म। परं अकुलीनाः जनाः असंस्कृतज्ञाः मुर्खाः। अतएव तेषां भाषा अपभ्रंशवहुला प्राकृतेति आसीत्।

यदा वयं संस्कृतभाषायाः महत्वविषये विवेचयामः यावन्तो हि विषयाः सन्ति सम्वविष्यन्ति च तावन्तः सर्वेऽपि गद्यपद्यरूपे संस्कृतसाहित्ये चिराद्विराजन्ते। तेषां विपुलः संग्रहो यदि कुत्रापि सुलभोऽस्ति सः संस्कृतं एव। उदाहरणरूपेण - चत्वारो वेदाः संस्कृतमयाः। तथा षट्वेदाङ्गानि यथा- शिक्षा- कल्प- व्याकरणं- निरूक्तं- छन्दः- ज्योतिषम्। पुनः अष्टादशपुराणानि। अस्मात् सूच्यते संस्कृतभाषाया महत्वम् साहित्यभण्डारस्य च निःसीमता।

अस्मिन् स्वतन्त्र-भारते बह्व्यः समस्याः सन्ति। विविधसमस्यानां मध्ये एकताविध ायिन्याः भाषायाः आवश्यकता अधुना अनुभूयते। परं बहुवाद-विवादानान्तरमिदमेव समीचीनं

प्रविभाति यत् हिन्दी संस्कृतञ्च विहाय नास्ति काचिदन्या भाषा या भारतस्य राष्ट्रभाषात्वप्राप्तये योग्या भवेत्। यतोहि मन्या: या: भाषा: सन्ति ता: सर्वा: अपूर्णा: एकदेशीया: अल्पभाषियाश्च सन्ति। संस्कृतभाषा एव राष्ट्रभाषा भवितुं योग्या। यतोहि यस्या: भाषाया: साहित्यं विशालं व्यापकं तथा या संस्कृता परिमार्जिता नानालंकार विमण्डिता वर्त्तते।

पुन: विश्वस्य सकलासु भाषासु प्राचीनतमा इयं संस्कृतभाषा। इयं भाषा सर्वासां भाषाणां जननी अस्ति। संसारंऽस्मिन् सर्वमपि प्राचीनं साहित्यं संस्कृतभाषायामेव प्राप्यते।

एभि: कारणै: यदि संस्कृतभाषा देशस्यास्य राष्ट्रभाषा समुद्घोषिता चेत् तर्हि महान् लाभो भवेत्। यदि अस्य भारतस्य प्राचीनसंस्कृते:, धर्मस्य आर्याणां पूर्वजानां च गौरवस्य रक्षा आवश्यकी, तर्हि संस्कृतस्य प्रचार: आवश्यक:। अधुना केवलमेव इयं संस्कृतभाषा एव भारतस्योन्नतिं कर्त्तुं समर्था दृश्यते।

**जयतु संस्कृतम्, जयतु भारतम्॥"**

# समावेशी शिक्षा के सिद्धान्त

**दिवाकर मिश्र**

शिक्षाशास्त्री द्वितीयवर्षम्

समावेशी शिक्षा को मुख्यत: निम्नलिखित सिद्धान्तों पर आधारित किया गया है -

(1) **व्यक्तिगत रूप से भिन्नता** - (Individual Difference) व्यक्तिगत रूप से प्रत्येक व्यक्तियों में भिन्नता पायी जाती है। यह भिन्नता रंग रूप तथा व्यक्तित्व इत्यादि में पायी जाती है। विशिष्ट बालकों को उनके व्यक्तित्व इत्यादि के अनुसार ही शिक्षित किया जाता है। प्रतिभावान छात्रों को अधिक विस्तारपूर्वक पढ़ाया जाता है तथा मन्दबुद्धि बालकों को प्रत्येक कार्य धीरे-धीरे सिखाया जाता है। कुछ ऐसे बालक होते हैं जो बिलकुल रुचिपूर्ण तरीकों से पढ़ाई नहीं करते, उनको शिक्षा के प्रति जागृत करना समावेशी शिक्षा का मुख्य सिद्धान्त है। अत: व्यक्तिगत भिन्नताओं के अनुसार ही छात्रों को समावेशी शिक्षा प्रदान की जा सकती है।

(2) **माता-पिता द्वारा सहयोग प्रदान करना** - (Provide cooperation by parent) समावेशी शिक्षा के अन्तर्गत माता-पिता का सहयोग होना अति आवश्यक है। यदि माता-पिता पूर्णत: सहयोग देंगे तभी विशिष्ट छात्रों को उचित प्रकार से समावेशी शिक्षा प्रदान की जा सकती है।

(3) **भेदभाव रहित शिक्षा** - (Non-Discriminatary Education) भेदभाव रहित शिक्षा हेतु सर्वप्रथम छात्रों की पहचान की जानी अति आवश्यक है क्योंकि इसके आधार पर ही छात्रों को वर्गीकृत किया जा सकता है।

(4) **विशिष्ट कार्यक्रमों द्वारा शिक्षा** - (Education through special programme) विशिष्ट शिक्षा हेतु कई विशिष्ट कार्यक्रमों को लागू किया जाता है। शारीरिक रूप से बाधित छात्रों की शिक्षा हेतु उनके माता-पिता को विद्यालय का पूर्ण सर्वे

करने का अधिकार प्राप्त होता है।

यदि माता-पिता शिक्षण संस्था की कार्य-प्रणाली से सन्तुष्ट नहीं होते हैं तो वे इच्छानुसार बालकों को शिक्षण संस्थाओं से निकालकर किसी अन्य शिक्षण संस्था में भेज सकते हैं। अत: विशिष्ट बालकों को विशिष्ट कार्यक्रमों के द्वारा ही उचित शिक्षा प्रदान की जा सकती है।

(5) **वातावरण नियन्त्रणपूर्ण होना** - (Restrictive Environment) जहाँ तक उचित हो प्रत्येक बाधित बालकों को नि:शुल्क उपयुक्त शिक्षा मिलनी चाहिए। सामान्यत: शिक्षा और संस्थाओं में किसी बालक को स्वीकार अथवा अस्वीकार करने का विकल्प किसी विद्यालय की व्यवस्था में नहीं है।

# प्रायोगिकमनोविज्ञानस्यौचित्यम्

**संजय कुमार तिवारी**

शिक्षाशास्त्री द्वितीयवर्षम्

**प्रास्ताविकङ्किञ्चित्** - यथा प्रतिभात्युपर्युक्ताच्छीर्षकाद्यत् सत्स्वपि मनोविज्ञानस्यानेकविध शाखासु अस्तीयं अन्यतमा विशिष्टतमा चेयं शाखा। न च मनोविज्ञानमपि प्रायोगिकं व्यावहरास्यविज्ञानमिति व्युत्पत्यादिति वाच्यम्। यतोहि अत्र यन्त्राद्यासाहाय्येन छात्राणां प्रायोगिकक्रियया परिमार्जितत्वात्।

प्रायोगिक मनोविज्ञानस्यौचित्यर्मास्तन वेति चेत् तर्हि यथा लक्षणप्रतिपदोक्तयो: प्रतिपदोक्तस्यैव ग्रहणमितिवत् सैद्धान्तिक प्रायोगिकयो: प्रायोगिकस्यैव वलीयस्त्वमिति स्वीकारादस्ति मनोविज्ञनस्यावश्यमौचित्यम्। एवञ्च शिक्षणाधिगमप्रक्रियायान्तु अनितरासाधारणावश्यकता तयुद्देश्यावाप्तये।

**ऐतिहासिक परिप्रेक्ष्यम्** - मनोविज्ञानस्योपत्ति: तावत् दर्शनशास्त्रेण अथ च शारीरिकविज्ञानेन वा सम्पृक्तत्त्वाज्जाता। यद्यत्यासीद्मनोविज्ञानमिदं मनोविज्ञानस्याभिन्नाङ्गत्त्वेन तथापि भवसप्तल्यधिकअष्टादशततमे" वर्षे महोदयेन श्री वुण्टमहोदयेन 'लिपजिग' विश्वविद्यालये समारब्धादिमेयं प्रयोगशाला। एवञ्चास्मिन् प्रारम्भे शैथिल्यं पुनश्च कालान्तरे तीव्रगत्या विकास: सम्प्राप्त:। आगतं एवञ्च प्रो. बेवर फेकलर एविंगहॉसादय: नैके समर्थका: स्वीयसमर्थनं प्रदत्तं येन स्वतन्त्रशाखात्त्वं भजते। प्रायोगिकमनोविज्ञानस्यास्याशय: निरूप्यतेतद्धि ध्वयते शीर्षकेण यत् मनस: विज्ञानं मनोविज्ञानम् एवञ्च प्रयोग सम्बन्धिनं यन्मनोविज्ञानं तत्प्रायोगिक मनोविज्ञानमिति।

सर्ववादी अयं पक्ष: यत् प्रायोगिक सैद्धान्तिकयो: प्रायोगिकस्य स्वीकरेणमिति।
तेन प्रयोगस्य प्राधान्यं सर्वतोभावेन स्वीकार्योऽस्ति। शिक्षणेऽपि तथैव प्रायोगिक विधीनां प्रयोग: मुक्तकण्ठेन प्रतिपादिता: शिक्षाशास्त्रिभि:।

यद्यपि प्राचीन शिक्षापद्धतौ सैद्धान्तिक ज्ञानस्योपरि अधिकं बलं दीयते स्म। यथा श्रौत परम्परादय:। तथापि साम्प्रतिक च काले प्रायोगिकज्ञाने स्वीयानुमति: प्रददति। यथा - किण्डरगार्डेन कृत्वाधिगमादय:। आशयोऽयं यच्छात्रा: सैद्धान्तिकज्ञानापेक्षया प्रायोगिकज्ञाने

आञ्जस्येनाहमिकताया च स्वरुचिं यच्छति। अवबोधे तेषामवधानं कृत्त्वाधिगमे दत्तचित्त रूपेण भवति।

अत: अवधान–परीक्षणाय उत वा अवधानेऽपेक्षिपत परिवर्तनाय च प्रायोगिकमनोविज्ञानस्यास्ति अशेषावश्यकता। एवञ्च प्रायोगिक मनोविज्ञानमिदं वैशिष्टयेनाधिगमस्थानान्तरणेऽपि अतीवाश्यकत्त्वं भजते।

**निष्कर्षोपसंहारो वा –**

नैष्कर्षोऽयं यदस्मिन् छात्राणां प्रभावाधिगम: एवञ्च अधिगमस्थानान्तरणे सशक्तता अवधानता कुशलता च सम्पादनाय समायोज्यते। आनुभाविकज्ञानं सैद्धान्तिक ज्ञानपेक्षया वैशिष्टयं विदधाति इति कृत्त्वा सैद्धान्तिक ज्ञानेन सह प्रायोगिकज्ज्ञानं देयं येन शिक्षणाधिगमप्रक्रियोद्देश्यानां पूर्ति: भवेदिति।

# वसुधैवकुटुम्बकम्

**ममतासाहु:**

शिक्षाशास्त्री, द्वितीयवर्षम्

परिवर्त्तनशीलोऽयं संसार:। इदं जगत् सुखदु:खात्मकम्। सुखानन्तरं दु:खं, दु:खानन्तरं च सुखम्। सुखदु:खयो: परिवृत्या एतत् संसारं विपद्यते। संसारे नहि कश्चन दु:खम् इत्यत्वेन काम्यते। दु:खनिरोधश्चस्य एक एव उपाय: विश्वे शान्ते: सद्धर्मस्य च संस्थापना वर्त्तते।

भारतस्य महान् सम्राट् अशोक: विश्वजनानाम् अभ्युदयाय भगवत: बुद्धस्य सत्य–अहिंसयो: प्रचारार्थं चीनश्रीलंकादयेषु विदेशेषु स्वपुत्रं प्रेषितवान्, तै: महर्षिभि: सततम् एव उदीरितं यत् सर्व–भूत–हित–साधनम्। एतदेव यज्ञप्रक्रियायां स्वाहा (स्वआहा स्वार्थस्य सर्वथा त्याग:) इदं न मम इत्यादिभि: पदै: निर्दिश्यते।

संस्कृतभाषायां वसुधैवकुटुम्बकम् इति भावनासम्बद्धा: नैके श्लोका: वर्तन्ते। यथा हितोपदेशे–

**अयं निज: परोवेति गणना लघुचेतसाम्।**
**उदार चरितानां तु वसुधैवकुटुम्बकम्।।**

श्लोकेऽस्मिन् मानवसंस्कृते: सर्वोत्तम: सिद्धान्त: प्रतिपादित:। मनोजेतरा: जन्तवस्तु प्रायश: स्वकुटुम्बमेव संसार इति मन्यते। यथा ते सन्ति कूपमण्डूका: मानवस्तु सकलं जगत् द्रष्टुमिच्छति। तथा हि कश्चिज्जना: पद्यवटकुटुम्बे सुखमनुभवन्ति। इमे जना: मम सहायका: ते कुशलिनस्ते निरामया: भवन्तु तेषां सुखेन अहमपि सुखी इति भावना तस्य मनसि वर्त्तते।

वस्तुत: लोके द्विविधा जना: भवन्ति। उदारचरिता: लघुचेतसश्च। उदारचेतजना: सर्वान् जनान् सुखीकर्त्तुमेव स्वजीवनस्य परमोद्देश्यं स्वकर्त्तव्यं मन्यते। लघुचेताजना: सर्वदा स्वमुखस्येव चिन्तनं कुर्वन्ति। यथा – वृक्ष: सर्वेषां कृते उदारभावना समभावेन उद्घाटयति। छायाप्रदानं करोति, फलं ददाति एतादृश: उदारचेतस: यथा उपकारिषु सदयं भवन्ति तथैवानुकुर्यात्।

पक्षिणामादर्शस्तु प्रसङ्गेऽस्मिन् समुदेति। असंख्यास्ते विहगा: उत्तलतरंगमयान– महासागरमपि अहर्निशमङ्गीय प्रतरन्ति। ततश्च विविधान् देशान देशान्तराणि च कुटुम्बीकृत्य सार्वलौकिकं सुखमनुभवन्ति भावयन्ति च।

विश्वे विद्यमानाः सर्वे सुखिनः स्युः, सर्वे निरोगिनः भवन्तु, कोऽपि दुःखं न प्राप्नुयात् यथा–

**ऊँ सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्॥**

विश्वस्य सर्वेऽपि प्राणिनः एकस्यैव परमपितः परमेश्वरस्य पुत्राः सन्ति। देशीया विदेशीया वा ते सर्वे एकस्यैव परिवारस्य सदस्या इव वर्त्तन्ते। तत्र किं कारणं यद् भेददृष्टिः प्रवर्त्तते। अत एव अनन्तसुखप्राप्त्यार्थं वसुधैवकुटुम्बकम् इति भावना जगति इति सर्वेः मनुष्यैः अंगीकर्त्तव्या। विश्ववन्धुत्वं मानवं देवत्वं प्रापयति। अतः सर्वैः सह विश्ववन्धुत्वं वसुधैवकुटुम्बकं इति भावनया व्यवहारः कर्त्तव्यं यैः उदारैः मानवैः स्वार्थभावनाः समुन्नार्थं वसुधानां सर्वेषु यथोचितं पितृ–मातृ–वन्धुभगिनीप्रभृतिभावना मन्यते।

यतः कोऽपि कदापि कस्मैचन न क्रुध्यात्, ईर्ष्येद वा इत्यादयः भवन्ति वसुधैवकुटुम्बकम् इति।

# नारीशिक्षा

**मधुस्मिता नन्दी**
शिक्षाशास्त्री द्वितीयवर्षम्

अस्माकं समाजः न केवलं पुरुषाणां, किन्तु नारीणामपि अस्ति। अतः सुसंस्कृते समाजे पुरुषणां शिक्षा आवश्यकी अस्ति तथा स्त्रीणामपि समाजे स्थानं समानरूपेणास्ति। समाज रथस्य द्वे चक्रे स्तः। यथा एकेन चक्रेण रथस्य गति असम्भवा, तथा जीवनस्य गति नारिणा विना असम्भवा। अशिक्षिता नारी संसाररथं कथं चालयति। अतः स्त्रीशिक्षा अतीवावश्यकी।

प्राचीनकालेऽपि स्त्रीशिक्षा अनिवार्या आसीत्। वैदिककाले नार्यः अधिकशिक्षिताः आसन्। गार्गी, मैत्रेयी–आद्यः विदुष्यः वेदशास्त्रार्थनिपुणाः आसन्। कालिदासस्य पत्नी विद्योत्तमा महती विदुषी आसीत्। आधुनिककाले स्त्रियः शिक्षणमनिवार्यम्। यदि माता सुशिक्षिता भवेत् तर्हि सा स्वपुत्राणां पालनं शिक्षणं च सुचारुरूपेण कर्तुं शक्नोति। यदि सा अशिक्षिता, तर्हि तस्याः सन्ततिरपि विद्याहीना–संस्कारहीना च भविष्यति। शिक्षिता नारी अधिकयोग्या गृहकार्यसंचालने समर्था च भवति।

अद्य एकमपि क्षेत्रं नास्ति, यत्र नार्याः प्रभावो नास्ति। विद्यालयेषु, महाविद्यालयेषु कार्यालयेषु सर्वत्र नार्यः कार्यरताः सन्ति। किंबहुना अनेकाः नार्यः संसदसदस्याः सन्ति। नगरपालिकासु, विधानसभासु, लोकसभासु अपि सदस्याः सन्ति, ताः सुचारुरूपेण कार्यं कुर्वन्ति च। श्रीमती इन्दिरागान्धीमहोदया अस्माकं देशस्य प्रधानमन्त्रिपदम अलंकृतवती। श्रीमती सोनियागांधीमहोदया अपि राजनीतौ कार्यरता अस्ति।

कुलस्य तथा समाजस्य उन्नत्यर्थं स्त्रीशिक्षा अनिवार्या खलु। यतः शिक्षिता नारी न केवलं स्वजीवनं सफलं करोति, किन्तु सा परिवारस्य राष्ट्रस्यापि अभ्युदयं करोति। सुशिक्षिता नारी सर्वत्र पूज्यते। अतः कथितं –

**यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः।**

# समयस्य महत्त्वम्

पङ्कज उपाध्यायः
शिक्षाशास्त्री द्वितीयवर्षम्

समयस्य समुचितरूपेण उपयोगः एव समयस्य सदुपयोगः कथ्यते। समयस्य सदुपयोगः मानवजीवनस्य हितसाधकेषु साधनेषु साधनं वर्त्तते। संसारे बहूनि वस्तूनि बहुमूल्यानि सन्ति परं तेषु सर्वापेक्षया बहुमूल्यं वस्तु समयः एव वर्त्तते। यतः अन्यानि वस्तूनि विनष्टानि अपि पुनः लब्धुं शक्यन्ते परन्तु व्यतीत समयः केनापि उपायेन पुनः लब्धुं न शक्यते। विद्या विनष्टा पुनः अभ्यासेन लब्धुं शक्यते, धनं विनष्टं पुनः उपार्जनेन लब्धुं शक्यते, यशः विनष्टं पुनः सत्कर्मणा उपार्जयितुं शक्यते परं विनष्टः समयः सहस्त्रैः अपि प्रयत्नैः दुर्लभः एव।

अतएव समयः सर्वाधिकं बहुमूल्यं वस्तु मन्यते। अस्माकं भारतीयानां कृते अयं राष्ट्रनिर्माणस्य कालः वर्त्तते। अस्माकं स्कन्धेषु राष्ट्रनिर्माणस्य महान् भारः वर्त्तते। अस्मिन् समये तु विशेषरूपेण अस्माभिः समयस्य सदुपयोगे ध्यानं दातव्यं, येन शीघ्रतया राष्ट्रस्य समुन्नतिः स्यात्। अस्मिन् विषये छात्रैः विशेषरूपेण ध्यानं देयम्। यतः ते एव भारतस्य भाविनः कर्णधाराः तथा भाग्यविधातारः सन्ति।

# शिक्षाक्षेत्रे मनोविज्ञानस्य योगदानम्

**संध्या मेहरा**
शिक्षाशास्त्री द्वितीयवर्षम्

मनोविज्ञानशास्त्रं हि नूतनं नाम, व्यवहारस्य अध्ययनकारणात् मनोविज्ञानसिद्धान्तान् शिक्षा स्वकीय क्षेत्रे योजयति। यदा प्रभृति मनोविज्ञानस्य शिक्षाक्षेत्रे समावेशो जातः तदा प्रभृत्येव शिक्षायाः क्षेत्रे अनेकानि परिवर्तनानि जातानि सन्ति। वस्तुतः मनोविज्ञानेन शिक्षायाः अर्थपरिमार्जनमेव कृतं वर्तते। प्राचीनयुगे शिक्षा धर्मानुप्राणिताऽसीत् प्रमुखं शिक्षायाः उद्देश्यमपि मोक्षप्राप्तिरेवासीत्। साम्प्रतिके युगे मनोविज्ञानस्य हेतोः शिक्षायाः उद्देश्यं वर्तमानजीवनं सुखयुक्तं समृद्धियुक्तं करणीयमेव भवति। इयमेव शिक्षा जनेषु व्यवसायिक-सामाजिक-शारीरिक-सम्बन्धानां निपुणतां वर्धयति एव। शिक्षायाः उद्देश्यपरिवर्तनामिदं मनोविज्ञानस्य प्रवेशकारणादेव सम्भवं जातम्। शिक्षणप्रक्रियायां शिक्षकः पाठ्यचर्या, छात्रश्च त्रयो ध्रुवाः भवन्ति। प्राचीनयुगे एतेषु शिक्षकः प्राधान्येनासीत् स्वीकृतः। तदा शिक्षा शिक्षककेन्द्रिता, अध्यापककेन्द्रिता वा आसीत्। इदानीम् तु शिक्षेयं बालकेन्द्रिता सञ्जाता। शिक्षायाः पाठ्यक्रमस्यापि निर्धारणं छात्राणां रुचेः, अभिरुचेः, अभिवृत्तेश्च ध्यानं विधाय क्रियते। एतस्मिन् परिवर्तनेऽपि मनोविज्ञानमेव हेतुरूपेण वर्तते।

प्राचीनयुगे शिक्षा एकाङ्गिनी एवाभवत्। शिक्षया केवलं बौद्धिकविकास एव अपेक्षित आसीत् पुरा। सम्प्रति तु छात्राणां सर्वाङ्गीणविकासे बलं दीयते। इदानीं शारीरिकविकासोऽपि

तथा महत्त्वं धारयति। यथा बौद्धिकविकासः। वस्तुतः स्वस्थे शरीरे एवं स्वस्थमस्तिष्कं भवति इति स्वीक्रियतेऽद्य। सर्वे एव विकासाः परस्पराश्रिताः वर्तन्ते। शारीरिकविकासस्य, मानसिकविकासस्य, सामाजिकविकासस्य, संवेगात्मकविकासस्य इत्येतेषु कस्याध्येयस्य कृते विशिष्टं बलं न दीयते अद्य।

आरम्भिककाले अध्यापक एव केन्द्रभूत आसीत् शिक्षणप्रक्रियायाम्। अध्यापनकाले सः एव सक्रियो भवति स्म। छात्राः तु कक्ष्यायां श्रवणरताः भूत्वा निष्क्रिया एव तिष्ठन्ति स्म। कक्षायाः नियन्त्रणं कर्तुं सः विशिष्टं प्रयासं विदधाति स्म। शिक्षाक्षेत्रे मनोविज्ञानस्य प्रवेशेन साम्प्रतं छात्राः कक्षायां सक्रियाः भवन्ति। छात्रान् सक्रियान् कर्तुं शिक्षको दृश्यश्रव्योपकरणानां प्रयोगाद्युपायानाचरति कक्षायाम्। छात्राणाम् अधिकाधिकं सहयोगमाप्तुं शिक्षको युत्नशीलो भवति सर्वमिदं मनोविज्ञानाध्ययनेन सम्भवति।

एतेन छात्राणां ज्ञानस्य सम्यक् मापनं कर्तुं शक्यते। इदमेव मनोविज्ञानस्यैव शिक्षाक्षेत्रे प्रभावो वर्तते। अस्य मूल्याङ्कनस्य सम्प्रत्ययोऽपि मनोवैज्ञानिकपरीक्षणनैव परिष्कृतो वर्तते। इदं मूल्याङ्कनं केवलं ज्ञानात्मकमेव न भवति, प्रत्युत क्रियात्मकमपि भवति। एतेन या क्षमता छात्राणां विषयाध्ययनस्य कार्यसम्पादनस्य कौशलसम्पादनस्य वा भवति। तस्याः विकासो यथाऽवसरं कर्तुं शक्यते। अतः शिक्षायाः साफल्यं मनोविज्ञानस्य साहाय्येनैव प्राप्तुं शक्यते।

**शिक्षामनोविज्ञानस्य क्षेत्रम्** -

1. बालकस्य विशेषयोग्यतानाम् अध्ययनम्।
2. बालकस्य रुचीनाम् अरुचीनाञ्च अध्ययनम्।
3. बालकस्य वंशानुक्रमस्य वातावरणस्य च अध्ययनम्।
4. बालकस्य प्रेरणानां मूलप्रवृत्तीनाञ्च अध्ययनम्।
5. बालकस्य विकासस्य अवस्थानाम् अध्ययनम्।
6. बालकस्य शारीरिक-मानसिक-संवेगात्मक क्रियाणाम् अध्ययनम्।
7. बालकस्य शारीरिक-मानसिक-चारित्रिक-सामाजिक-संवेगात्मक-सौन्दर्यात्मक- विकासस्य अध्ययनम्।
8. बालकस्य व्यक्तिगतविभिन्नतानाम् अध्ययनम्।

शिक्षा मनोविज्ञानस्य क्षेत्रे तत्सर्वं ज्ञानं विषयश्च सम्मिलिताः भवन्ति, यत्तु अधिगम प्रक्रियायाः सम्यज्ज्ञानाय कुशलनिर्देशनाय चावश्यकं भवति" इति।

**शिक्षा मनोविज्ञानस्योद्देश्यानि** -

शिक्षा मनोविज्ञानस्योद्देश्यानि सन्ति व्यवहारस्य ज्ञानं भविष्यकथनं नियन्त्रणञ्चेति, एतस्मिन् सन्दर्भे केलीमहोदयस्य अभिमतमन्यतमं वर्तते - स तु शिक्षामनोविज्ञानस्य नवसंख्यकान्युद्देश्यानि प्रतिपादयति।

1. बालकस्य स्वभावज्ञानम्।
2. बालकस्य बुद्धेर्विकासस्य च ज्ञानम्।
3. बालकेभ्यः वातावरणेन सह सामाञ्जस्यं स्थापयितुं सहयोगप्रदानम्।

4. शिक्षाया: स्वरूपेण, उद्देश्येन च सह परिचयप्रदानम्।
5. अधिगमस्य विविधैः सिद्धान्तैः, विधिभिश्च सह परिचयस्थापनम्।
6. संवेगानां नियन्त्रणं तेषां शैक्षणिकमहत्त्वस्य चाध्ययनम्।
7. चरित्रनिर्माणस्य विविधसिद्धान्तैः सह परिचयः।
8. विद्यालयीयानाम् विषयाणां ज्ञानस्य मापनविधीनां प्रशिक्षणम्।
9. शिक्षामनोविज्ञानस्य सिद्धान्तानां ज्ञानाय प्रयुक्तानां विधीनां ज्ञानप्रदानम्।

# अभिप्रेरणम्

**गीताञ्जली**

शिक्षाशास्त्री, द्वितीयवर्षम्

व्यवहारेऽस्माभिः अवलोक्यते यत् कोऽपिजनः किमपि विशिष्टकार्यं सम्पादयितुं संलग्नो भवति। तत्कर्मणः प्रत्याकर्षणं प्रवर्तनञ्च नितान्तं दुष्करं भवति। प्रयोजनमनुदिश्य न मन्दोऽपि प्रवर्तते"। इति न्यायोक्तिरपि प्रसिद्धा वर्तते विद्वत्सु। एतस्मिन्नेव सन्दर्भे बुभुक्षितः प्रचलितो वर्तते। एतेन सिद्धमिदं भवति यत् प्राणिनामाभ्यन्तरे तेषां परिवेशे वा केचन अभिप्रेरका आकर्षणशक्तयो वा वर्तमानाः भवन्ति ये तस्य तद्विशिष्टं व्यवहारं जनयन्ति। एतेनैव कारणेन एकस्यामेव परिस्थितौ लोकाः भिन्नव्यवहारं प्रदर्शयन्ति।

**अभिप्रेरणस्य स्वरूपम् -**

'अभिप्रेरणम्' इति पदम् आङ्गभाषायाः 'मोटीवेशन' (Motivation) इति शब्दस्य रूपान्तरण वर्तते। आङ्गलभाषायाः 'मोटीवेशन' (Motivation) इति पदस्योत्पत्तिः लेटिनभाषायाः 'मोटम् (Motum) इति धातोः जाता वर्तते। एतस्यार्थो वर्तते 'मूव' (Move) 'मोटर' (Motor) प्रगत्यात्मकम् इति वा। प्रेरणायाः व्युत्पतिजन्योऽर्थो भवति 'गतिसञ्चालनम्' इति।

जनानां क्रियासन्दर्भे पक्षत्रयं भवति। तत्र प्रथमो भवति सः किं करोति? इति, द्वितीयस्तु 'स केन प्रकारणे करोति?' इति, तृतीयो भवति यत् 'स किमर्थं करोति? इति। एवमेव यदा शिक्षायाः सन्दर्भे अवलोकयामः तदा विचार्यते यत् (1) बालकः किम्पठति? (2) सः कथं पठति? (3) बालकः किमर्थं पठति? इति। अत्र प्रदत्तेषूदाहरणेषु तृतीयस्य प्रश्नस्य सम्बन्धः 'किमर्थम्' इत्यनेन वर्तते। एतस्यैव प्रश्नस्य सम्बन्धः 'प्रेरणया सह' वर्तते। एतस्मिन् सन्दर्भे केचक्रचफील्डमहोदयै। प्रतिपादितवन्तौ यत् 'प्रेरणायाः प्रश्नः किमर्थमित्यनेन वर्तते' इति।

**अभिप्रेरणस्य परिभाषा -**

(1) **मेक्डूगलमहोदयमते** - प्रेरकं नाम प्राणिनः ताः दैहिक्यो मनोवैज्ञानिक्यश्च दशाः वर्तन्ते याः तं किमपि कार्य विशिष्टरीत्या सम्पादयितुं योजयति' इति।

(2) **बुडवर्थमहोदयानुसारम्** - प्रेरकस्तु व्यक्तेः सा मनोदशा वर्तते या कस्यचिन्निश्चित-तस्योद्देश्यस्य प्रत्यक्षं तं निश्चितव्यवहारार्थं विवशं करोति' इति।

(3) **गुडमहोदयानुसारम्** - कस्यचित्कार्यारम्भस्य, प्रवर्तनस्य नियमितीकरणस्य वा प्रक्रियैव 'प्रेरणा' इत्यभिधीयते' इति।

(4) **मैक्डोनाल्ड महोदयानुसारम्** - प्रेरणा व्यक्तेराभ्यन्तरे जायमाने तच्छक्तिपरिवर्तनं वर्तते यस्मिन् भावात्मकोत्तेजनायाः लक्ष्यं प्रति क्रियायाश्च गुणो विद्यमानो भवति इति।

**अभिप्रेरणायाः स्रोतांसि** -

मानवानां प्रवृत्तिः कार्यार्थं किमर्थं भवनीति? सन्दर्भे पर्याप्तः विचारः प्रचलति। कस्यचित्कार्यस्य कृते मानवो विविधैर्विचारैः प्रभावितो भवति। मानवे प्रेरणायाः अस्तित्वं तु नूनमेव भवति। अभिप्रेरणायाः सन्दर्भे विविधाः धारणाः व्यवहारे प्रचलिताः विद्यन्ते।

विविधासु धारणाष्वन्यतमा वर्तते ईश्वरीयशक्तिविषयणी धारणा। मानवो हि सृष्टिकर्तुः रचना मन्यते। अत एव सर्वमपि तस्य दैवाधीनमेव भवति। ईश्वरो यत्कारयिष्यति तदैव कर्तुं शक्तो भवति मानवः।

मानवस्तु केवलं हेतुभूतौ भवति कर्मणि मानवानां प्रवृत्तिरपि देवाधीना भवति। प्राणिषु मानवः श्रेष्ठो भवति। यस्मात् कारणादयं भवति श्रेष्ठः, तेषु कारणेषु तस्य तर्कशक्तिः प्रमुखा वर्तते। मानवस्तु कार्यस्यौचित्यमनौचित्यं वा तर्केणैव निर्धारितं करोति। मानवस्य मस्तिष्कस्य तर्कः एव मानवमन्येभ्यः श्रेष्ठत्वम् अभिसूचयति। मानवस्य व्यवहारस्तस्य मस्तिष्कस्य क्रियाशीलतायां निर्भरो भवति। मानवो जीवनस्य प्रतिक्षेत्रं सामाजिकै प्रभावैः कार्यार्थम् अभिप्रेरितो भवति।

**निष्कर्षः** -

एवं प्रकारेण अभिप्रेरणां बिना अस्माकं काऽपि क्रिया न भवति। प्रत्येकं कार्यस्य कृते अभिप्रेरणा आवश्यकी भवति। शिक्षणे अध्ययने उत कस्मिंश्चिदपि कार्ये यदि वयं अभिप्रेरिता भवामः तर्हि कार्यं साधुतया सिद्धं भवति। इति।

# पाठयोजनायाः आवश्कतत्त्वानि

**कान्हु पधान**

शिक्षाशास्त्री द्वितीयवर्षम्

वस्तुतः या पाठयोजना अध्यापकेभ्यः स्वोद्देश्यप्राप्तये साफल्यं प्रयच्छति सा एव उत्तमा पाठयोजना इति स्वीकुर्वन्ति शिक्षाशास्त्रिणः। प्रायः एवं भवितुमर्हति यदेका योजना अपरेषामध्यापकानां कृते अन्यथा भवेत्। अतः पाठयोजनायाः कृते न किमपि नियमं प्रतिपादयितुं शक्नुमः। फलतः अत्र केवलं केषाञ्चन तत्त्वानां वैशिष्ट्यानि एव प्रतिपाद्यन्ते। यथा -

(1) पाठयोजनायाः स्वरूपं लिखितं स्यात्।

(2) अस्यां सम्पूर्णपाठस्य प्रारूपं सारांशश्च स्यात्।

(3) पाठयोजनायां प्रत्येकं सोपानस्य अवधिः निश्चितः स्यात्।

(4) पाठयोजनायां नूतनज्ञानं छात्राणां पूर्वज्ञानेषु आधारितं स्यात्।

(5) पाठयोजनायां छात्राणामर्जितज्ञानस्य सम्बन्धः नूतन ज्ञानेन सह संस्थापनीयम्।

(6) अस्यां प्रयुज्यमानानां उपयुक्तशिक्षणविधीनां प्रयोगस्योल्लेखः कर्त्तव्यः।
(7) अस्यां छात्रेभ्यः प्रदीयमानानां प्रमुखविधीनामुल्लेखः भवेत्।
(8) पाठयोजनायां छात्रेभ्यः क्रियमाणानां विविध प्रश्नानामुल्लेखः भवति।
(9) अस्यां छात्रेभ्यः कक्षागृहादिकार्यप्रदानस्य व्यवस्था भवति।
(10) अस्यां छात्रैः अधीययानानां क्रियाणामुल्लेखः वर्णनं वा भवेत्।
(11) पाठयोजनायां वैयक्तिकभिन्नतायाः आधारे शिक्षणव्यवस्था भवेत्।
(12) पाठयोजनायां पाठस्य सारांशः सरलभाषया भवेत्।
(13) पाठयोजनायाम् अक्षराणी सम्यक् रूपेण लेखितव्यानि।
(14) अस्यां सामान्यविशिष्टोद्देश्यानाम् उल्लेखः स्पष्टरूपेण स्यात्।
योहम्-राव-सिम्पसनमहोदयानुसारेण -
या पाठयोजना प्रत्यक्षरूपेण स्थित्यनुकूला नास्ति, तस्याः प्रयोगः एव भ्रमात्मकः भवति। शिक्षकाः कक्षायाः स्थित्यनुगुणं पाठयोजनायां परिवर्तनं कुर्युरिति।

# समावेशात्मकशिक्षा

**राजेशरञ्जनः त्रिपाठी**
शिक्षाशास्त्री, द्वितीयवर्षम्

**समावेशात्मक शिक्षा**- समावेशात्मकशिक्षायाः तात्पर्यं वर्त्तते यत् विशिष्टशैक्षणिक- आवश्यकतानां पूर्त्यर्थं सामान्यविशिष्टबालकानां कृते समानावसरः भवेत्। पूर्वम् अस्या शिक्षायाः परिकल्पना विशिष्टछात्राणां कृते एव कृतासीत् परम् आधुनिकसमये द्वयोः सामान्यविशिष्टबालकयोः शिक्षणस्य समानावसरः भवेदिति अर्थे समन्वित समावेशीशिक्षा विशिष्टक्षमता बालकाः, यथा- मन्दबुद्धिः, दृष्टिबाधितः, श्रवणबाधितः, गतिबाधित तथा प्रतिभाशाली एवं सर्वप्रकारकबालकाः च अन्तर्भवन्ति। समावेशीशिक्षाद्वारा सर्वप्रथमं छात्राणां बौद्धिकस्तरं विज्ञाय तेषां शिक्षास्तरस्य निर्धारणं क्रियते।

**समावेशात्मकशिक्षायाः परिभाषाः -**

स्टेफन तथा लेकहर्टमहोदययोः अनुसारम् समावेशात्मकशिक्षायाः तात्पर्यं भवति वाधितानां (पूर्णतया अपङ्गानां) सामान्यकक्षया सह व्यवस्थीकरणम्। एषः समानावसरः मनोवैज्ञानिकशोधोपरि आधारितः अस्ति, यत् व्यक्तिगतयोजनया सामाजिकमानकीकरणं तथा अधिगमं वर्धयति।

शिक्षाशास्त्रानुसारं समावेशीशिक्षया एव योग्यतालिंगजातिभाषाचिन्तास्तर-सामाजिक- आर्थिकस्तरादयः वर्धते।

समावेशीशिक्षा स्वतः प्रक्रिया नास्ति अपितु मनुष्याणां कृते मनुष्यैः निर्मितः एकः आधुनिकप्रयासः अस्ति।

**सम्प्रत्ययः** - अस्याः शिक्षायाः ऐतिहासिकपक्षाः विकासश्च कनाडा-अमेरिका देशयोः लभ्यन्ते, वस्तुतः समावेशात्मकशिक्षा भूमण्डलीकरणस्य स्वरूपं वर्त्तते। अस्याः शिक्षायाः आरम्भः

अष्टादशशताब्द्याम् अभवत्। अस्य जनकः प्लेटोमहोदयः वर्त्तते।

- ◆ इयं शिक्षा समावेशस्य सिद्धान्तस्योपरि आश्रिता अस्ति।
- ◆ अस्यां शिक्षायां सर्वप्रकारकबालकाः समाविशन्ति।
- ◆ बालकाः स्वकीयविद्यालयस्य सामान्यकक्षासु विशिष्टतायाः भावं विना अध्ययनं कुर्वन्ति पठन्ति च।
- ◆ सर्वेषु विद्यालयेषु विशिष्टबालकानां कृते अपङ्गबालकानां शिक्षायै प्राथमिकव्यवस्था स्यात्।
- ◆ विद्यालयस्य शैक्षिक-शारीरिक-सामाजिक-भावात्मक-व्यवसायिककार्यक्रमेषु सर्वेषां कृते समानावसराः भवेयुः।
- ◆ इयं शिक्षा अपङ्गबालकानां कृते विशिष्टशिक्षणविधीनां विशिष्टानां कृते पृथक् व्यवस्था क्रियते।

**आवश्यकता** -

- ◆ सामान्यमानसिकविकासः सम्भवः भवति।
- ◆ सामाजिक-एकीकरणं सुनिश्चितं करोति।
- ◆ समावेशीशिक्षा अल्पव्यययुक्ता भवति - अपङ्गबालकानां सामान्यकक्षासु अल्पव्ययः भवति।
- ◆ समावेशीशिक्षाया एकीकरणं सम्भवम्।
- ◆ समावेशीशिक्षाया शैक्षिकैकीकरणं सम्भवं भवति।
- ◆ समानतासिद्धान्तस्य अनुपालनम् अत्र भवति।

**महत्त्वम्** -

- ■ इयं शिक्षा व्यक्तिगतविभिन्नतायाः उपरि वलं ददाति।
- ■ मातृपितृभ्यः सहयोगप्रदानं करोति।
- ■ भेदभावरहितशिक्षणोपरि वलं ददाति।
- ■ सामान्यछात्राणां कृते विशिष्टछात्राणां च समानशिक्षाव्यवस्था।
- ■ विशिष्टकार्यक्रमैः शिक्षाप्रदानम्।
- ■ निशुल्कम् (6-14 वर्ष पर्यन्तम्) शिक्षा एवम् अनिवार्यशिक्षाव्यवस्था।
- ■ बालकबालिकानां समन्वयनं सहपठनं च।
- ■ सहयोगपूर्णवातावरणं च भवति।

**उद्देश्यानि** -

- ◆ सर्वेभ्यः समानशिक्षावसरः।
- ◆ सहायक-अनुकूलरचना, पर्यावरणेन सह स्थित्वा समायोजनम्।
- ◆ आत्मनिर्भरतायाः पृष्ठपोषणम्।
- ◆ अत्र सर्वेभ्यः समानमहत्त्वं दीयते।
- ◆ अस्योद्देश्यं विशिष्टशिक्षणविधिना सामान्यशिक्षणविधेः एकीकरणस्वरूपमेव।

# सत्यमेव जयते नानृतम्

**अभय देहुरी**
शिक्षाशास्त्री, द्वितीयवर्षम्

**सदयं हृदयं यस्य भाषितं सत्यभूषितम्।**
**कायः परहिते यस्य कलिस्तस्य करोति किम्॥**

सते अर्थात् कल्याणाय हितं सत्यं भवति। यद् वस्तु यथा विद्यते तस्य तेनैव रूपेण कथनं प्रकाशनं लेखनं वा सत्यमिति अभिधीयते। परमेश्वरेण जिह्वा सदुपयोगार्थं दत्ता, अतः - जिह्वायाः सदुपयोगः सत्यभाषणेन कर्तव्यः।

जगति सत्यस्य यादृशी आवश्यकता विद्यते, न तादृशी अन्यस्य कस्यचिद् वस्तुनः। सत्येनैव समाजस्य स्थितिः वर्तते। यदि सर्वेऽसत्यवादिनो भवेयुस्तर्हि न लोकस्य स्थितिः क्षणमात्रमपि भवितुं शक्नोति। सत्यस्य एव एष महिमा यद् वयं समाजे मनुष्येषु विश्वासं कुर्मः। अतः सिध्यति यत् सत्यं लोकस्याधारोऽस्ति। अत एवोच्यते-

**गोभिर्विपश्च वेदैश्च, सतिभिः सत्यवादिभिः।**
**अलुब्धैर्दानशूरेश्च, सप्तभिर्धार्यते मही॥**

एवं च -

**सत्येन धार्यते पृथ्वी सत्येन तपते रविः।**
**सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम्॥**

सत्यभाषणेन मनुष्यो निर्भीको भवति। सत्यभाषणेन तस्य तेजः यशः कीर्तिः विद्या गौरवं च वर्धन्ते। यः सत्यं वदति, स सर्वेभ्यः पापेभ्योऽपि निवृत्तो भवति। यदा स कस्मिंश्चित् पापे प्रवर्तते, तदा स चिन्तयति यद् अहं सत्यमेव वदिष्यामि, अतः सर्वेषां दृष्टिषु हीनो भविष्यामि, एवं स पापाद् विरमति। सत्यभाषणं वस्तुतो जीवने सर्वोत्तमं तपो वर्तते।

उच्यते यत् -

**सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।**
**नासत्यं च प्रियं ब्रूयात् एस धर्मः सनातनः॥**

सत्यस्य प्रतिष्ठयैव संसारस्य कल्याणम्, अभ्युदयः उन्नतिश्च भवन्ति। यः कश्चित् सत्यम् आश्रयति, तस्य जीवनं सफलं भवति। अतः उच्यते- सर्वं सत्ये प्रतिष्ठितम्"। ये सत्यं पालयन्ति, ते सर्वोत्तमं धर्मं कुर्वन्ति। ये च सत्यं परित्यज्य असत्यं भजन्ते, ते महापातकं कुर्वन्ति। समाजस्य देशस्य लोकस्य च मिथ्याभाषणेन नाशो भवति। अत एवोच्यते - नहि सत्यात् परो धर्मो नानृतात् पातकं परम्।

सत्यस्थ पालनार्थमेव महाराजो दशरथः प्रियं पुत्रं रामं वनं प्रेषितवान्। राजा हरिश्चन्द्रः सत्यपालनार्थमेव सर्वाणि दुःखानि असहत। युधिष्ठरः सत्यभाषणस्य प्रभावादेव विजयमलभत।

महात्मा गान्धिमहोदयः। सत्यस्यैव सदा शिक्षामदात्। भारतस्य राष्ट्रियचिह्ने अपि 'सत्यमेव जयते' इत्याऽधारेण उल्लिख्यते।
अतः सर्वेरपि लौकिकपारलौकिकाभ्युदयाय सत्यमेव सदा भाषणीयम्।

## आधुनिकयुगे संस्कृतशिक्षकाय शैक्षिकप्रविधेः उपयोगिता

**भास्करपाणिग्राही**
शिक्षाशास्त्री, द्वितीयवर्षम्

साम्प्रतिकयुगे विश्वस्मिन् विश्वे सर्वत्र विज्ञानस्य प्रादुर्भावः परिदृश्यते। वैज्ञानिकाविष्कारेण अस्माकं देशे नूतनक्रान्तिः समागता, ज्ञानस्य विस्फोटः सञ्जातः। वैज्ञानिक-ज्ञानस्य कौशलस्य च प्रयोगः विविधेषु क्षेत्रेषु दरीदृश्यते। शिक्षाक्षेत्रे अपि वैज्ञानिकज्ञानस्य प्रयोगः शैक्षिकप्रविधि माध्यमेन क्रियते।

वयं वक्तुं शक्नुमः स्वीयविचारान् अन्यैः सह आदानप्रदानार्थम् अभिव्यक्तिः अपेक्षिता। सा च अभिव्यक्तिः किञ्चित् साधनोपेक्षिता। साधनं नाम भाषा। भाषाज्ञानात् परं प्राप्य वस्तुनः ज्ञानसम्प्रेषणाय कश्चिद् विधिः उपयुज्यते। विधीनां ज्ञानप्रदानं तु भवति, किन्तु रुच्युत्पादनार्थं, ज्ञानस्य सम्यक् सम्प्रसारणार्थं तथा प्रशिक्षणकार्यक्रमे प्रभावशालिशिक्षकस्य निर्माणार्थं शैक्षिकप्रविधिः दिशां निर्दिशति।

**शैक्षिकप्रविधिः -**

'शैक्षिकप्रविधिः' इत्यत्र 'शिक्षा' 'प्रविधिः' चेति पदद्वयं वर्त्तते। शिक्षा शब्दस्य उत्पत्तिः 'शिक्ष्' विद्योपार्जनम् इत्यर्थे सञ्जाता। प्रविधिः प्रविधिविज्ञानञ्च इति पदद्वयम् आङ्गलभाषायां (Technology) इति शब्दस्य पर्यायपदम्। प्रविधिः इत्युक्ते दैनन्दिनजीवने वैज्ञानिकज्ञानस्य प्रयोगविधिः।

ई. एम. बुटर महोदयानुसारम् - ज्ञानस्य व्यवहारे विनियोगप्रक्रिया एव शैक्षिकप्रविधिः।"

Rebort A. Con - "Educational Technology is the application of Scientificd process to man's learning conditions."

सर्वादौ 1926 तमे वर्षे अमेरिकादेशीयेन सिडनी-प्रेसीमहोदयेन ओहियो-विश्वविद्यालये शिक्षकयन्त्राणां निर्माणे शिक्षणप्रविधेः उपयोगः कृतः। तेन एतत् यन्त्रं शिक्षणयुक्तिरूपेण परीक्षणार्थं निर्मितमासीत्।

**शैक्षिकप्रविधेः उद्देश्यानि -**

शैक्षिकप्रविधिः शिक्षायाः उद्देश्यानि न निर्धारयति अपितु शिक्षणोद्देश्यानि व्यवहारिकरूपेण परिभाषते। शिक्षाक्षेत्रे यन्त्राणाम् उपयोगेन मुख्यतः ईदृशोद्देश्यपूर्तिः भवितुमर्हति। यथा-

(1) ज्ञानस्य सञ्चयः (2) ज्ञानस्य प्रसारः (3) ज्ञानस्य विकासः

**शैक्षिकप्रविधेः क्षेत्राणि -**

शैक्षिकप्रविधेः क्षेत्रन्तु बहुविस्तृतमस्ति। कार्यानुसारेण उपयोगानुसारेण च यथा -

(1) व्यवहारप्रविधिः (2) शिक्षणप्रविधिः (3) अनुदेशनप्रविधिः

(4) अनुदेशनप्रारूपप्रविधिः

**शैक्षिकप्रविधेः उपयोगिता -**

वैज्ञानिकेऽस्मिन् युगे नवीनतमाविष्काराणां पदार्पणेन जगति ज्ञानस्य तीव्रगत्या प्रसारः प्रचारः जातः। साम्प्रतं प्रविधिं विना शिक्षायाः विषये कल्पनाऽपि अतिदुर्लभा प्रतीयते। अतः शैक्षिकप्रविधेः महत्वविषये इत्थं वक्तुं शक्यते यथा -

(1) शिक्षकाय उपयोगिता

(2) अधिगमक्षेत्रे उपयोगिता

(3) समाजार्थम उपयोगिता

(4) शैक्षिकप्रशासने सहायकः

(5) विषयाणां सम्बन्धस्थापने सहायकः

(6) अनौपचारिकशिक्षायां सहायकः

(7) प्रशिक्षणे उपयोगी

**संस्कृतशिक्षकाय शैक्षिकप्रविधेः उपयोगिता -**

शैक्षिकप्रविधौ प्रवीणः शिक्षकः छात्राणां व्यवहारान् अधीत्य तत्र वाञ्छितं परिवर्त्तनम् आनेतुं शक्नोति। विषयज्ञः स्यात्, अपि तु व्यवहाराध्यनकुशलः स्यात्। शैक्षिकप्रविधिः एतस्मिन् क्षेत्रे शिक्षकं समर्थं निर्माति। कस्मिन् समये किं प्रकरणं केन विधिना, कैः दृश्यश्रव्यसाधनैः पाठनीयमिति मार्गदर्शनं करोति। दूरदर्शनम्, आकाशवाणी सङ्गणकम् इत्यादिसाध नानि उपयुज्य कथं तेषां प्रसारणार्थं प्रयोगः कर्त्तव्यः इति  प्रविधिः निर्दिशति।

आधुनिकयुगे संस्कृतशिक्षकाय शिक्षणप्रविधिज्ञानं नितान्तमपेक्षते। मानवाधिगमस्य सम्पूर्णप्रक्रियायाः संशोधनार्थम् एषः प्रयुज्यते। शैक्षिकप्रविधिः ज्ञानस्य तादृशी काचित शाखा भवति या विभिन्नप्रविधीनां यान्त्रिकं प्राकृतिकविज्ञानं व्यवहारिकविज्ञानं च प्रयुज्य शैक्षिकप्रक्रियां सुदृढां कर्तुं प्रयतते।

'संस्कृतम्' नाम न केवलं भाषामात्रम् अपि तु अस्माकं जीवनमूल्यानाम् आधारस्थली वर्त्तते। सा सर्वव्यापिनी, विकासपरा, सुमधुरा, सुललिता, नितरां नमनशीला, जीवनसम्पन्ना सूक्ष्मा बोधक्षमा च। एतादृश्याः विशिष्टसंस्कृतभाषायाः शिक्षकशिक्षायाः व्यवस्था कीदृशी भवेत्? संस्कृतशिक्षणं कथं रुचिकरं सुग्राह्यं च भवेत्? एतेषां प्रश्नानां सन्दर्भे नवचिन्तनस्य आवश्यकता अस्ति।

शिक्षकशिक्षायाः उद्देश्यानि समयस्य परिस्थितीनामनुगुणञ्च परिवर्त्तमानानि सन्ति, अतः संस्कृतशिक्षाशिक्षायाः उद्देश्येषु अपि परिवर्त्तनम् अपेक्षितम् यतोहि परिवर्तितोद्देश्यानुसारेण शिक्षाव्यवस्थायामपि परिवर्त्तनं भवति। पारम्परिकशिक्षणद्वारा छात्रेषु रुचिः न उत्पद्यते। एतदर्थं आधुनिककाले विषयं, सरलं रुचिकरं च कर्तुं शिक्षकेण कश्चन् विशिष्टप्रयोगः कृतः वर्तते येन कक्षासम्प्रेषणं प्रभावपूर्णं भवति। नूतनविधीनां प्रविधीनां प्रयोगेण छात्राः अभिप्रेरिताः भविष्यन्ति।

# लेखनशिक्षणम्

**प्रकाश पाणिग्राही**
शिक्षाशास्त्री द्वितीयवर्षम्

भाषाया: रूपद्वयमस्ति मौखिकं, लिखितञ्चेति। वर्णात्मकशब्दै: भावानामभिव्यक्ति: मौखिकं रूपं भवति। एतेषां वर्णानाम् लेखात्मकसङ्केतै, लिखितरूपेण निबन्धनं भाषाया: लिखितं रूपं भवति। मौखिकं रूपं तात्कालिकं भवति। लिखितन्तु स्थायी भवति। मौखिकन्तु प्रत्यक्षं विद्यमानान् जनान् एव बोधयति। लिखितन्तु देशान्तरे, कालान्तरे च नियमान् अपि जनान् बोधयति। अत: स्पष्ट-सुन्दर-अक्षराणां लेखनं भाषाध्ययनस्य प्रमुखमङ्गं भवति।

लेखनशिक्षणस्य विषये पण्डितानां मतभेदो दृश्यते। प्रसिद्ध: शिक्षादार्शनिक: फ्रोबेलमहोदय: एवमभिप्रैति यत् बालका: प्रथमं वाचने शिक्षिता: भवेयु:। यदा बालका: अक्षराणां प्रत्यभिज्ञाने समर्था: भवन्ति, तदा लेखनशिक्षणमारब्धव्यमिति। मारियामाण्टेसारीमहोदयाया: आशय: एतद् विपरीत एव वर्तते। प्रथमं बालकेभ्य: लेखनशिक्षा दातव्या। तेन शारीरिकक्रियायां मांसपेशीनां नियन्त्रणं सिध्यति। तत: परं बालका: पूर्वपरिचितानां लिखिताक्षराणां वाचने रुचिमादधति। एवं बालका: पाठ्यविषयाणां सरलतया वाचने समर्था: भवन्ति।

अन्ये केचित् तृतीयं मतमुपस्थापयन्ति वाचनस्य लेखनस्य च शिक्षणं युगपदेव स्यादिति। अत्रैतदेव मतं युक्तं प्रतीयते यत: दर्शनं, श्रवणं, वाचनम् लेखनमिति विभिन्ना: व्यापारा: परस्परम् उपकारका: भवन्ति। सूक्ष्मेक्षिकया वीक्षणेन देवनागरीलिपिशिक्षणे वाचनलेखनयो: युगपत् शिक्षणं लाभदायकं भवति। यत: देवनागरीलिप्याम् उच्चार्यमाणानां वर्णानां सङ्केता: निश्चिता: सन्ति। तथा च वाचने लेखने च वर्णानां समानरूपता वर्तते। आङ्गलभाषायान्तु तद् विपरीतं भवति।

**सुन्दरलेखनस्य उपाया:** - लेखनसौन्दर्यस्य सम्पादनाया निम्नोक्ता: विषया: भवन्ति।

(1) उपवेशनस्य, लेखनीग्रहणस्य च रीति:।
(2) लेखनसामग्री।
(3) अक्षराणां रचना।
(4) अध्यापकस्यादर्श:।
(5) अभ्यास:।
(6) सुलेखप्रतियोजिता।
(7) आकर्षकमुदाहरणम्।
(8) रूपरेखानुकरणविधि:।

# विद्यालये पुस्तकालयस्य महत्त्वम्

**बिरेन्द्रबढेई**
शिक्षाशास्त्री, द्वितीयवर्षम्

ध्यानपूर्वकं विचारणमभ्यसनं पठनं च अध्ययनं भवति। अध्ययनेन कार्यसम्पादनशक्तिः उदेति, ज्ञानञ्च वर्द्धते। जीवनस्य सफलतायाः कृते अत्यन्तम् आवश्यकम् अस्ति अस्य। अत एवाध्ययनं मानवहिताय परमावश्यकम्।

अध्ययनस्य सम्बन्धो विद्यया साकं भवति। यद्यपि विद्यालयेषु गुरुकुलेषु अध्यापकात् शिक्षकात् वा विद्याप्राप्तिः अध्ययनं भवति। तथापि स्वतः अनुभवेन शास्त्रलोचनेन वा ज्ञानप्राप्तिः अध्ययनस्य मूल-प्रकृतिः। सामान्यतः विद्यालयेषु शिक्षकेभ्यः छात्राः विद्यां प्राप्नुवन्ति प्रमाणपत्राणि च लभ्यन्ते। परं स्वतः यदा ज्ञानार्थं तत्परो भवति मनुष्यः, तदैव तेन ज्ञानं प्राप्यते। अध्ययनाय समुचितवातावरणं पुस्तकालये एव भवति इति। किमर्थम् इत्युक्ते तत्र स्वच्छ-शान्त-प्रकाशयुक्तवातावरणस्य व्यवस्था भवति।

विद्यालये पुस्तकालयस्य महत्वपूर्णं स्थानं भवति। वस्तुतः प्रधानाध्यापकः विद्यालयस्य मस्तिष्कं, शिक्षकः स्नायुतन्त्रं, पुस्तकालयश्च तस्य हृदयं भवति।

**पुस्तकालयस्य अर्थः** -

पुस्तकालयः इति शब्दस्य आङ्ग्लभाषायां LIBRARY इति पर्यायः भवति। अस्य LIBRARY इति शब्दस्य निष्पत्तिः लाटिन् भाषायाः LIBERA इति शब्दाज्जाता। अयं लाटिनभाषायाः शब्दः 'पुस्तक' शब्दस्य बाचकः अस्ति।

अतः LIBRARY इति शब्दस्य तात्पर्यं भवति तत्स्थलं यत्र पुस्तकेषु सञ्चिताः अनुभवाः विचाराः भावाश्च पाठकेभ्यः सरलतया दातुं शक्यन्ते।

पुस्तकालयः इत्यस्मिन् पदे पदद्वयं वर्त्तते। प्रथमं पदं 'पुस्तकम्' अपरं पदं च आलयः इति। सामान्यरूपेण एतस्य पदस्य अर्थः पुस्तकानां समूहः यत्र भवति तदेव पुस्तकालयः इति।

**महत्वम्** -

अथ पुस्तकालयः विद्यालयकुटुम्बस्य बौद्धिकाभिवृद्धिस्थानं भवति। छात्राः पुस्तकालये विभिन्नविषयाणां, भाषाणां, ग्रन्थानां, महापुरुषाणाञ्च ज्ञानं सम्पादयन्ति। एवं छात्राणां प्रारम्भिकसंज्ञानात्मकविकासः यथा सूचनानां प्राप्तिः तथा च अध्ययनप्रवृत्तीनां सर्वाङ्गीणविकासः भवति। पुस्तकालयः ज्ञानस्य भण्डारः भवति। भवता यथा भगवतां पूजां कर्त्तुं (भणितुं) देवालये उत्सुकाः भवन्ति तद्वत् छात्राः पुस्तकालये पुस्तकानाम् एवं समाचारपत्रिकादीनां पठनेन नितरां स्वाध्याये उत्सुकाः भवन्ति।

विद्यालये पुस्तकालयः नितान्तम् आवश्यकं वर्त्तते। किमर्थम् इत्युक्ते यदा कक्षा रिक्तो भवति तस्मिन् समये छात्राः पुस्तकालयं गत्वा विभिन्नानि पुस्तकानि, पत्राणि च पठित्वा समयस्य सदुपयोगं कर्त्तुं शक्नुवन्ति। विद्यालये विभिन्नाभिरुचीनां विकासाय पुस्तकालयस्य

साहाय्यम् आवश्यकं भवति। निर्धनच्छात्राः उपकृताः भवन्ति। सांस्कृतिक-बौद्धिक-शारीरिक-रचनात्मक-सर्जनात्मकविकासाः, लेखनकौशलं, मौनवाचनकौशलं मानसिकविकासः एवं साहित्यादिविषये विकासः भवति। ज्ञानार्जनेन अध्यापनसमये छात्राणां न केवलं पाठ्यविषये एव अध्ययनाध्यापनं भवति अपितु पाठयेतरविषयानमपि अधीत्य ज्ञानं सम्पादयन्ति। विद्यालयपुस्तकालयः न केवलं छात्राणामेव उपयोगाय एवं लाभाय भवति, अपितु अध्यापकानामपि उपयोगाय भवति। अध्यापकानां बौद्धिकविकासाय एवं विषयज्ञानाय च उपकरोति। अनेन विभिन्नविषयाणां ज्ञानार्जनं सम्भवति। शिक्षकाः वदन्ति यत् पाठ्यपुस्तकाध्ययनेन बालकानां सम्पूर्णज्ञानं न भवितुमर्हति। तत्सम्पूर्तिः पुस्तकानामेव समाचारपत्रिकादीनाम् अध्ययनेन कर्त्तुं शक्यते। पुस्तकालयः विद्यालयस्य बौद्धिकप्रयोगशालारूपेण स्वीकृतः अस्ति। यत्र छात्रेषु अध्ययनं प्रति रुच्युत्पादने वैयक्तिकसामूहिकयोजनानां, साहित्यिकक्रियाणां, विनोदव्यापाराणां पाठ्यसहगामिक्रियाणाञ्च साहाय्यं प्राप्यते।

पुस्तकालये प्रसिद्धलेखकानां पुस्तकं भवति। महापुरुषाणां जीवनचरितम् इत्यादिभिः सम्बन्धितमहत्वपूर्णकथायाः ज्ञानं भवति। महापुरुषाणां जीवनचरितं पठित्वा छात्राः अभिप्रेरतो भूत्वा देशहिताय किमपि कर्त्तुं शक्नुवन्ति। पुस्तकं छात्राणां मित्रं भवति। तस्य रक्षणाय पुस्तकालयस्यावश्यकता विद्यालये भवति। पुस्तकमाध्यमेन एव ज्ञानस्य संचयः प्रचारः प्रसारश्च भवति। अद्यतनयुगं ज्ञानविज्ञानस्य युगं भवति। अतः छात्राणाम् अधिकज्ञानार्जनाय विद्यालये पुस्तकालयस्य महत्वम् अत्यावश्यकं भवति।

**निष्कर्षः** -

अस्माकं जीवनस्य सर्वासामपि समस्यानां समाधानार्थं विद्यमानः पथप्रदर्शकः राजपथ- एव शिक्षा। बालकाः शिक्षाग्रहणार्थं विद्यालयं प्रति आगच्छन्ति। छात्राणां सर्वाङ्गीणविकासः विद्यालये एव भवति। विद्यालयस्य हृदयं भवति पुस्तकालयः, यत्र विविधानि पुस्तकानि पठनार्थं संगृहीतानि भवन्ति। मानवानां ज्ञानविस्ताराय अत्यन्तमुपयोगी भवति अयं पुस्तकालयः। छात्राणाम् अध्यापकानाम् च ज्ञानवर्द्धनाय विद्यालयीयः पुस्तकालयः भवति। अत्र शैक्षणिकानि पुस्तकानि संगृहीतानि भवन्ति। निर्धनच्छात्राणां कृते विद्यालयीयः पुस्तकालयः अत्युपयोगी भवति। पुस्तकालयसम्पर्कात् शनैः-शनैः विद्यारुचिः जागर्ति। छात्राः स्वरुच्यनुगुणं पुस्तकं पठित्वा ज्ञानार्जनं कुर्वन्ति। नवीनज्ञानस्य प्राप्तिः अत्रैव भवति। शिक्षकाः वदन्ति यत् सम्पूर्णज्ञानं पाठ्यपुस्तके न भवति तदतिरिच्य अन्योपयोगिग्रन्थाः अपि सम्पूर्णज्ञानप्राप्त्यर्थं सहायकाः भवति। अतः अधिकाधिक ज्ञानसम्पादनार्थं विद्यालये पुस्तकालयस्य अत्यावश्यकता भवति। किमर्थम् इत्युक्ते पुस्तकालयः एव ज्ञानस्य भाण्डारः भवति। अतः वक्तुं शक्यते यत् प्रत्येकस्मिन् विद्यालये उत्तमपुस्तकालयस्य व्यवस्था भवेत् इति।

# परीक्षाप्रबन्धनम्

**चैतन्यप्रसादमाझी**
शिक्षाशास्त्री, द्वितीयवर्षम्

परीक्षायाः सामान्योदेश्यानां प्राप्तये निश्चितावश्यकतानां पूर्त्तये च मानवानां भौतिकसंसाधनानां च नियोजनं, संघटन, मूल्याङ्कनं च परीक्षाप्रबन्धनमिति।
प्रत्येकमपि प्रबन्धने अंशत्रयस्य मूल्याङ्कनम्? POSDCQRB माध्यमेन परीक्षायाः प्रबन्धनं सरलं भवितुमर्हति।

**परीक्षायः योजनानिर्माणम् -**

क्रियमाण कार्यकरणस्य पूर्वानुमानं योजना इति। अत्र परीक्षायाः कृते योजनायाः निर्माणस्य चर्चा भवति। अर्थात् परीक्षायाः स्वरूपं लिखितं-मौखिकं वा, वार्षिकं अर्द्धवार्षिकं वा, एकघण्टात्मकं त्रिघण्टात्मकं वा, प्राथमिक-माध्यमिक-उच्चस्तरीयं वा भवेत्। यथा-

1. प्रश्नपत्राणां ब्लूप्रिन्टनिर्माणम्।
2. प्रश्नानां काठिन्यस्तरनिर्धारणम्।
3. परीक्षायाः उद्देश्यनिर्धारणम्।
4. भौतिक-मानवसंसाधनानां संघटनम्।
5. परीक्षायै आवश्यकसूचनानां संकलनम्।
6. मूल्याङ्कनपरिषदः निर्माणम्।

**परीक्षायाः क्रियान्वयनम् -**

परीक्षायाः कानिचन विशेषकार्याणि भवन्ति। यथा - छात्राणाम् अर्जितज्ञानस्तरस्य परीक्षणम् शिक्षणविधेः सफलतायाः ज्ञानम् शिक्षणोद्देश्यसफलतायाः ज्ञानम्, छात्राणां स्तरनिर्धारणस्य चयनस्य च व्यवस्था छात्रेषु प्रतियोगिताभावनाजागरणम् इत्यादीनि परीक्षायाः क्रियान्वयनक्षेत्राणि प्रवर्त्तितानि। विशिष्टपरीक्षा यथा -

1. परीक्षानिरीक्षकाणामध्यापकानां नियुक्तिः।
2. परीक्षानियन्त्रकस्य नियुक्तिः।
3. मूल्याङ्कनपरिषदः नियुक्तिः।
4. छात्रेभ्यः प्रश्नपत्रं परीक्षायाः यथा समये प्रदानम्।

**परीक्षायाः मूल्याङ्कनम् -**

अत्र छात्रैः प्रदत्तप्रश्नोत्तराणां यथोचितरूपेण विश्लेषणं कृत्वा मूल्याङ्कनप्रदानमेव इव मूल्याङ्कनाय एकस्या मूल्याङ्कनपरिषदः निर्माणं कर्त्तव्यं यत्र प्रशिक्षितमूल्याङ्कनकर्त्तारः स्युः।

1. उत्तरपुस्तिकानां मूल्याङ्कनाय एतादृग्जनस्य नियुक्तिः स्यात् यस्य शिक्षणानुभवः पर्याप्तः स्यात्।
2. अङ्कनविधेः" सार्वजनिकरूपेण स्पष्टनिर्देशः स्यात्। मूल्याङ्कनपरिषदः प्रश्नपत्रनिर्मात्रा

सहेव उत्तरपुस्तिकायाः मूल्याङ्कन कुर्य्यात्।

3. फलाङ्कप्रदानसमये अशुद्धिकृताङ्काः न्यूनीकरणीयाः इत्येतस्य निर्धारणमपि पूर्वतः एव भवतु।
4. मूल्याङ्कने वास्तविकतामानेतुं विद्यार्थिनः नामाङ्कनं वर्ज्यं भवेत्।

**परीक्षायां ICT इत्यस्य भूमिका -**

ICT इत्युक्ते सूचनासम्प्रेषणप्रविधिः। अस्य पूर्णनाम भवति (Information and Communication Technology) संचारक्षेत्रे वैज्ञानिकैः स्वप्रगल्याधारेण वार्त्तमानिकसमयः सूचनाक्रान्तियुगरूपेण स्वकृतः। व्यवसाय उद्योग-वाणिज्य-शैक्षिक- आदिसंचारप्रगतौ च अस्य सूचनासम्प्रेषणप्रविधेः सहयोगदानं वर्त्तते। यथा-यथा शैक्षिकजगतः विकासः जायते। जनानाम् आवश्यकताः अभिवर्द्धन्ते। तथा संचारमाध्यमानां नवीनस्वरूपाण्यपि भवन्ति। वर्त्तमानसमये व्यवसाययिकविकासः तथा संचारविकासः उभावपि परस्परपरिपूरकौ स्तः।

**परीक्षाप्रणाल्यां संगणकस्योपयोगः -**

1. संगणकमाध्यमेन परीक्षणपदानां निर्माणम् प्रश्नपत्रनिर्माणं च क्रियते।
2. संगणकं प्रश्नानां संग्रहणं कृत्वा चिरस्थायीकरोति।
3. परीक्षाप्रणाल्याः सम्बन्धितप्रतिकृतिः प्रतिलेखः, अङ्कपत्रम् इत्यादीनां निर्माणम् अनेनेवमाध्यमेन त्रुटिरहितरूपेण क्रियते।
4. संगणक प्रयोगेण परीक्षायाः आवेदनपत्रं (Online) पूरयितु शक्यते।
5. संगणकस्य (In.NET) मध्ये (Online) प्रवेशपरीक्षा परीक्षाः च भवति।
6. उत्तरपुस्तीकानां मूल्याङ्कनं संगणक माध्यमेन शीघ्रतया भवति।

**परीक्षाक्षेत्रे (ICT) इत्यस्य लाभाः -**

1. सहजरूपेण परीक्षादिकार्याणां सम्पादनम्।
2. स्वल्पे समये अधिककार्यसम्पादनम्।
3. कार्येषु प्रामाणिकता भवति।
4. ICT माध्यमेन परीक्षाकार्येषु पारदर्शिता भवति।
5. स्वल्पव्ययता।

**हानिः -**

1. कदाचित् (डाटा) सूचनाया लोपः भवति। यदि प्रक्रिया सम्यक् न भवति चेत।
2. सूचनायाः (डाटा) इत्यस्य चौर्यं कृत्वा अपरे जनाः दुष्प्रयोगं कुर्वन्ति।
3. वैद्युतिकक्षेत्रे समस्या यदि विद्युत् भवति। तर्हि कार्य सम्पादने क्लेशः।

# न्यायदर्शने शैक्षिकचिन्तनम्

**सस्मितानाथः**
शिक्षाशास्त्री, द्वितीयवर्षम्

न्यायः आत्मदर्शनस्यैकोपायः। अतः व्याकरणदृष्ट्यापि विचार्यते इण्" प्रापणे धातोः घञ्" प्रत्यये आय् आदेशे नानयन्ति प्रापयन्ति तर्काः ऊहाः अनेनेति न्यायः। तर्कप्रमाणयोश्च प्रस्तुतेः न्यायः एका विद्या वर्त्तते। न्यायसूत्रभाष्यकरणे भाष्यकारेण वात्स्यायनोक्तं यत् प्रमाणैरर्थपरीक्षणं न्यायः।" न्यायः कस्यचिद्वस्तुनः यथार्थगणनाय, प्रतिपादनाय, प्रतिपाद्यविषयस्य संसिद्धये समीक्षणाय चालयनाय च एका युक्तिः। भारतीयास्तिकषड्दर्शनेषु न्यायदर्शनम् अन्यतमम्। न्यायदर्शनस्य प्रणेतारः सन्ति अक्षपादगौतममुनयः। आस्तिकनास्तिकदर्शने जीवनस्य व्यावहारिकाध्यात्मिकयोः उभयोः पक्षयोः वर्णनं प्राप्यते। भौतिकाध्यात्मिकसमस्यानां समाधानाय चिन्तनम्, ज्ञानलोके जीवनस्य सम्यक् सञ्चालनञ्च भारतीयदर्शनस्य प्रमुखोद्देश्यम्। भारतीयदर्शनं न केवलं मानसिकव्यायामः अपितु अस्य व्यावहारिकपक्षः सैद्धान्तिकपक्षाणामपेक्षया सवलः वर्त्तते।

**न्यायदर्शने शैक्षिकोद्देश्यानि -**

(1) न्यायदर्शनस्य मुख्योद्देश्यं भवति मोक्षप्राप्तिः।

(2) न्यायदर्शने प्रमाण-प्रमेयादिषोडशपदार्थाः निरूपिताः सन्ति।

(3) मोक्षस्वरूपस्य वर्णनसमये महर्षिगौतमेनोक्तं यत् दुःखध्वंस एव मोक्षः। मोक्षप्राप्त्यर्थं पदार्थानां ज्ञानं, कर्त्तव्यस्य च ज्ञानं केन माध्यमेन भवेत् अस्य कृते प्रमाणचतुष्टस्यं वर्णनम्। तदर्थं षोडशपदार्थानां ज्ञानमपि कर्त्तव्यम्। ते च षोडशपदार्थाः प्रमाण- प्रमेय- संशय- प्रयोजन-दृष्टान्त सिद्धान्त- अवयव- तर्क- निर्णय- वाद- जल्प- वितण्डा- छल- जाति- निग्रहस्थानानि। एतेषां पदार्थानां तत्वज्ञानेन छात्राणां मानसिकोन्नतिर्भविष्यति। अस्माकं जगति कानि-कानि तत्वानि सन्ति; केनोपायेन जीवनमूल्यबोधः जायते इति विषये अवगमिष्यन्ति। न्यायदर्शनस्यापरनाम वर्त्तते आन्वीक्षिकी।

**न्यायदर्शने पाठ्यचर्या -**

न्यायदर्शने पाठ्यचर्याविषये स्पष्टनिर्देशः यद्यपि नास्ति परञ्च षोडशपदार्थानां सम्यक्ज्ञानं तदा एव भविष्यति यदा बालकेषु तार्किकक्षमता तथा चित्तवृत्तिनिरोधः कथं भवेदित्यस्य ज्ञानं भवेत् अत एव न्यायदर्शनशिक्षणनेन सह पाठ्यक्रमे गणित-विज्ञान-योगशास्त्र- शारीरिकशिक्षादिविषयाणां समावेशः कर्त्तव्यः।

**न्यायदर्शने शिक्षणविधयः -**

(1) प्रत्यक्षविधिः - इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्।

(2) दृष्टान्तविधिः - दृष्टान्तविधेः अपरनाम उदाहरणविधिः वर्त्तते। उच्चकक्षायां

वादविधिः समस्यासमाधानाय महत्वपूर्णः।
(3) अनुमानविधिः – महर्षिगौतमेनोक्तं, तत्पूर्वतर्कमनुमानम्"। पाश्चात्यदार्शनिकैः मन्यते यत् ज्ञातस्याधारेण अज्ञातस्य निर्वचनमेव अनुमानम्।
(4) तर्कविधिः – व्याप्यस्याधारे व्यापकस्य प्रमाणीकरणं नाम तर्कः।
(5) अवयवविधिः–विषयं लघुपदे विभज्य प्रत्येकं पदस्थ तर्केणोपस्थापनमेव अवयवविधिः।

**न्यायदर्शने अनुशासनम् –**

न्यायदर्शने अनुशासनस्य महत्त्वं वर्तते। न्यायदर्शने आध्यात्मिकलौकिकञ्चोभयोः अनुशासनयोः महत्वमस्ति। योग–प्राणायामादिद्वारा आन्तरिकानुशासनं प्राप्यते। न्यायदार्शनिकैः मन्यते तत्वज्ञानाय समाधेः आवश्यकता, न्यायसूत्रे वर्णितमस्ति–

समाधिविशेषाभ्यासात्"

छात्राणां श्रृंखलितवुद्धिनिर्मितं तेषां मानसिकस्वास्यसमुस्थापनाय समाधिः सहायकः भवति। योगमाध्यमेन इन्द्रियाणां संयमाभिवर्धनं भवति।

**छात्राध्यापकयोर्मध्ये सम्बन्धः –**

न्यायदर्शनमपि अत्यादर्शनानुकूलशिक्षासाधने महत्त्वं ददाति अत्र छात्राः साधकाः, स्वसंशयान् गुरुभिः साकं सप्रमाणेन दूरीकुर्वन्ति। छात्राः गुरुणा सह वाद–विवादद्वारा उत्तमविचारान् प्राप्नुवन्ति। उक्तम् अस्ति .

ज्ञानग्रहणाभ्यासस्तद्विधैश्च सह संवादः।
तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनुसूयिभिरभ्युपेयाम्"
विद्याध्ययनम् अभ्यासश्च विषयमर्मज्ञैः सह कर्त्तव्यः।

न्यायदर्शनं न केवलं छात्रेभ्यः आवश्यकम्। अपितु मानसिक–तार्किकक्षमताभि– वर्धनाय सर्वेषां कृते हितकारि भवति। गुरुकुलशिक्षापद्धत्याम् अध्यापनोद्देश्यं छात्रेभ्यः न्यायिकशिक्षया सह तार्किकक्षमताभिवर्धनमपि वर्तते।

# शिक्षायाः स्वरूपम्

**संयुक्तादासः**
शिक्षाशास्त्री, द्वितीयवर्षम्

**शिक्षायाः अर्थः** – शिक्षा–विद्योपादाने इत्यस्माद् धातोः गुरोश्चहलः इति पाणीनीयसूत्रेण 'अ' प्रत्यये इति। अजाद्यतष्टाप्" इति टापि शिक्षा इति शब्दः निष्पद्यते। शिक्षाशब्देन प्रमुखतया 'विद्याग्रहणं' मन्यन्ते।

आङ्गलभाषायां शिक्षाशब्दः Education नाम्नाभिधीयते। Education इति शब्दः लेटिन् भाषायाः Educare, Educere, Educatum इति पदत्रयस्याधारेण उत्पन्न इति शिक्षाशास्त्रिणाभिमतम्।

Educare - To bring up परिपालनम्।

Educere - To lead out परिप्रकाशनम्।
Educatum 'kCns E + Duco शब्दद्वयं विद्यते।
DUCO - बहिरानयनम्।
पुनः शिक्षापदस्य निर्देशः (Instruction) शिक्षणम् (Teaching), प्रशिक्षणम् (Training), अनुशासनम् (Discipline), पालनपोषणम् (Breeding), संस्कृतिः (Culture) इत्याद्यार्थाः प्रतीयन्ते।

शिक्षायाः व्यापकार्थः- शिक्षा नाम आजीवनं प्रचाल्यमाना काचित् गतिशीला प्रक्रिया" इति स्वीकर्त्तव्यः।

प्रो. डम्विल वदति यत् - शिक्षायाः व्यापकार्थे ते सर्वे प्रभावा अन्तर्भवन्ति, ये हि व्यक्तिं जन्मतः आरभ्य मृत्युपर्यन्तं प्रभावयन्ति" इति।

शिक्षायाः संकुचितार्थः - विद्यालये प्रदीयमाना शिक्षा" इति अवधेयम्। Education is the fourth will in the class-room. अस्यायमभिप्राय यत् बालकः निश्चितयोजनानुसारं निश्चितपाठ्यक्रमानुसारं निश्चितविधिमाश्रित्य निश्चितोद्देश्यमाधारीकृत्य च शिक्षां प्राप्नोति।

**शिक्षायाः प्रक्रियाः -**

यदारभ्य मानवस्य ज्ञाननेत्रे उद्घटिते तदारभ्य अद्यावधि शिक्षाशब्दः विद्याग्रहणे प्रसिद्धः। भगवता मनुनोक्तम्-

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।इति।।

शिक्षानामाजीवनप्रचाल्यामाना काचित् प्रक्रियेति। शिक्षा तादृशी प्रक्रिया वर्त्तते, यथा प्रक्रियया मनुष्यस्य जन्मजातशक्तीनां स्वाभाविक-सामञ्जस्यपूर्णो विकासो भवति। एडम्समहोदयेन शिक्षा द्विमुखीप्रक्रियारूपेण मन्यते। एवं गुरुशिष्यौ च प्रमुखत्वेनाङ्गीकरोति। एवञ्च शिक्षा तादृशी प्रक्रिया अस्ति यस्यां व्यक्तिः अपरव्यक्तये ज्ञानं प्रदाय तस्याः प्रकृतिं विकासयति संवर्धयति परिवर्तयति च। रॉसमहोदयोऽपि वदति- चुम्बकस्य यथा ध्रुवद्वयं भवति तथा शिक्षायामपि ध्रुवद्वयस्य आवश्यकता भवति। तदध्रुवद्वयं भवति शिक्षकः छात्रश्च। अमेरिकादेशीयः प्रसिद्धशिक्षाशास्त्री डिविमहोदयः शिक्षनाम विमुखी प्रक्रिया इति। शिक्षकः-छात्रः-पाठ्यक्रमश्च। डिवि वदति मानवः सामाजिकप्राणी अतस्तस्य विकासः समाजे समाजेनैव वा भवितुमर्हति।

आधुनिकशिक्षाशास्त्रिणः शिक्षायाः बहुमुखप्रक्रियां स्वीकुर्वन्ति। साम्प्रतं प्रत्येकं ज्ञानक्षेत्रे निरन्तरविकासत्वात सर्वत्र दृष्टिः प्रसारयितुं न शक्यते। तदनुगुणम् अन्येनैव श्रमेण अल्पीयसि काले वहून् विषयान् ज्ञातुं सम्प्रयतते मानवः। न केवलं ज्ञानप्राप्तिक्षेत्रे अपितु शिक्षणस्य प्रत्येकं प्रक्रियायाम् अधिगमोत्पादनं कर्त्तुं प्रयतते। एतत् सर्वं मनसि निधाय आधुनिकाः वदन्ति यत् - न केवलं शिक्षाप्रक्रियायां छात्रः अध्यापकः पाठ्यक्रमः अपितु तदतिरच्यि अन्यदपि सहायकतत्त्वम् अस्ति इति। तद्यथा -

छात्रः - विद्यालयः
शिक्षाप्रक्रिया - पाठ्यक्रमः
समाजः-समूहः - शिक्षकः।

# बालकेन्द्रितशिक्षा

**रविन्द्र कुमार**
शिक्षाशास्त्री

प्राचीनकाले शिक्षायाः उद्देश्यं बालकानां मस्तिष्के केवलं ज्ञानारोपणं भवति स्म, किन्तु आधुनिकशिक्षाशास्त्रे बालकानां सर्वाङ्गीणविकासोपरि बलं दत्तम् अस्ति। येन कारणेन बालमनोविज्ञानस्य भूमिका सर्वाधिकमहत्त्वपूर्णा वर्तते।

वर्तमानयुगे बालकानां सर्वाङ्गीणविकासे शिक्षकाणां कृते बालमनोविज्ञानस्य ज्ञानम् आवश्यकं भवति। अस्य ज्ञानस्य अभावे न तु शिक्षकाः शिक्षां अधिकाधिकम् आकर्षिकं एवञ्च सरलीरूपा कर्त्तुं शक्नुवन्ति। अथ च नैव ते बालकानां विभिन्नानां प्रकाराणां समस्यानां समाध ानं कर्त्तुं शक्नुवन्ति।

- बालकेन्द्रितशिक्षायान्तर्गते हस्ताधारितगतिविधीनामुपरि बलं दत्तमस्ति।
- भारतीयशिक्षाविद्-गिजूभाईमहोदयस्य बालकेन्द्रितशिक्षायाः क्षेत्रे विशिष्टयोगदानं प्राप्तम्। बालकेन्द्रितशिक्षायाः विषये महोदयस्य बहूनि पुस्तकानि सन्ति। तस्य साहित्यं बालमनोविज्ञानशिक्षाशास्त्रकिशोरसाहित्यैः सह सम्बन्धितं वर्तते।
- John D.V. महोदयेन बालकेन्द्रितशिक्षायाः समर्थनं कृतम्। तेन समर्थितः 'लैब-विद्यालयः' प्रगतिशीलविद्यालयस्य उदाहरणमस्ति।
- John D.V. महोदयानुसारेण 'शिक्षा एका त्रिध्रुवीयप्रक्रियाऽस्ति' यस्य अन्तर्गते शिक्षकबालकपाठ्यक्रमाश्च आगच्छन्ति।
- अधुनातनशिक्षापद्धतिः बालकेन्द्रिता अस्ति। अस्मिन् अस्यां बालक प्रति पृथक्तया ध्यानं दत्तम् अस्ति। वञ्चितमन्दबुद्धिप्रतिभाशालिनां कृते शिक्षायाः विशेषः पाठ्यक्रमः दातुं प्रयासः कृतः अस्ति। बालकानां प्रवृत्तिः रुचयः एवञ्च क्षमतादीनां विषये शिक्षकस्य ज्ञानं अनिवार्यम्।
- व्यावहारिकमनोविज्ञानेन व्यक्तीनां परस्परविीान्नतानामुपरि ध्यानं दत्तम् अस्ति। येन माध्यमेन शिक्षकः प्रत्येकं विद्यार्थिनाम् उपरि ध्यानं विशेषतानां ज्ञानं तथा च तस्य कृते प्रबन्धनमपि कर्त्तुम् पूर्णतया सन्नद्धः भवति।

अधुनातनसमये शिक्षकस्य कृते शिक्षाशिक्षापद्धतिविषये ज्ञानं पर्याप्तं न अपितु शिक्षार्थिनामपि विषये ज्ञानम् आवश्यकम् अस्ति। यतोऽहि आधुनिकशिक्षा विषयप्रधाना उत शिक्षकप्रधाना न भूत्वा बालकेन्द्रिता अस्ति। अस्याम् अस्य महत्त्वं नास्ति यत् शिक्षकः ज्ञानयुक्तः आकर्षकः गुणयुक्तश्च अस्ति न वा अपितु अस्य महत्त्वम् अस्ति यत् सः बालकस्य व्यक्तित्त्वस्य विकासं कियत्स्तरे कर्त्तुं शक्नोति।

**बालकेन्द्रितशिक्षायाः विशेषताः** - बालकेन्द्रितशिक्षा आधुनिकशिक्षाप्रक्रियायाः अभिन्नमङ्गं वर्तते।

मनोवैज्ञानिकैः अस्मिन् सन्दर्भे अनेकाः विशेषताः उक्वन्ताः। याः अधोलिखिताः -
1. बालकानां ज्ञानम् 2. शिक्षणविधयः 3. मूल्याङ्कनं परीक्षणश्च 4. पाठ्यक्रमः 5. व्यवस्थापनं तथा च अनुशासनम् 6. प्रयोगः एवञ्च अनुसन्धानम् 6. कक्ष्यायां समस्यानां निदानं निराकरणञ्च

**बालकेन्द्रितशिक्षणस्य सिद्धान्ताः** - बालकेन्द्रितशिक्षणस्य प्रमुखाः सिद्धान्ताः निम्नलिखिताः वर्तन्ते -1. प्रेरणायाः सिद्धान्तः 2. व्यक्तिगताभिरुचेः सिद्धान्तः 3. लोकतान्त्रिकसिद्धान्तः 4. सर्वाङ्गीणविकासस्य सिद्धान्तः 5. चयनस्य सिद्धान्तः ।

# कर्मणि एव अधिकारः

**दिप्तीमयी महापात्र**
शिक्षाशास्त्री द्वितीयवर्षम्

भगवतः श्रीकृष्णनस्य एव उपदेशः व्यवहारदृष्ट्या अपि सार्वत्रिकः सार्वजनीनश्च अस्ति। यो हि मानवः यादृक् कर्मणा संलग्नो भवति, अद्य श्वः वा सः नूनं तस्य फलभाग् भवति भविता वा तदर्थं श्रीकृष्णेनोक्तम्-

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः**
**लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि।।"**

अस्मात् ज्ञायते यत् कर्मणः शास्त्रीयलौकिकसमाधिकारः वर्त्तते। गीतानुसारं त्यागो भवति त्रिविधः सात्विकराजसतामसभेदैः। तेषु संख्यातीत्येषु कर्मसु यज्ञदान-तपोरूकर्मणां त्यागो त्रिविधः। यतो हि यज्ञ-दान-तपांसि फलेच्छारहितानि। अनासक्तया भगवदर्थं कर्मपरायणं मनीषिणः सदा पावयन्ति। अत एतानि अपि कर्माणि फलानि च विहाय कर्तव्यानि भवन्ति। वर्णधर्मानुसारं श्रीकृष्णः कर्मणां विभागमारभते। तद्यथा -

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च**
**ज्ञानं विज्ञानमास्तिकयं विप्रकर्म स्वभावजम्**
**शौर्य्यं तेजो धृतिर्दीक्षं युद्धे चाप्यपलोचनम्**
**दानमीश्वरभावश्च क्षात्रं कर्मस्वभावजम्।**
**कृषि गौरक्षवाणिज्य वैश्यकर्मस्वभावजमे**
**परिचय्यार्यत्मकं कर्म शूद्रस्यापि स्वभावजम्।।**

एवं प्रकारेण चातुवर्ण्यस्य कर्मणां संक्षेपेण वर्णनं विधाय निर्दिशति श्रीकृष्णः -

**स्वे स्वे कर्मणभिरतः संसिद्धिं लभते नरः"**

स्वकर्मविरतो मानवः कर्मयोगेन भाग्यमपि परिवर्तयितुं पारयति। ये च मानवाः कार्यं वा साधयेत् शरीरं वा पातयेत" इति मन्त्रोच्चारणदीक्षिताः भवन्ति। ते नूनं भुवने कृतकार्या भवन्ति। अत एवं भगवता श्रीकृष्णेन भगवद्गीतायां स्पष्टरूपेण स्वीयम् अभिमतं प्रतिपादितम्-

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन**
**मा कर्मफलीतुर्भूर्मा ते संगोऽस्त्वकर्मणि।।"**

# नास्ति ज्ञानं गुरुं विना....

**अंकित यादव**
शिक्षाशास्त्री द्वितीयवर्षम्

**संसारीणां कति न सुकृता मन्यथा दुर्निदेशा।**
**तेषां जाता मयि न करुणा न त्रपा सानुभूतिः।**
**उत्सृज्येतानय मम गुरो! साम्प्रतं लब्धबुद्धिः**
**त्वामाथातः शरणमभयं युज्यतामात्मदास्ये ॥०१॥**

भावार्थः - मैने नम्र होकर संसार के लोगों के कितने प्रकार के दुर्निदेशों का पालन नहीं किया? परन्तु उन लोगों के मेरे प्रति न तो करुणा पैदा हुई न लज्जा और न ही सानुभूति। इसलिए हे मेरे गुरुदेव! अब मैं इन सबका त्याग करके आपकी भयरहित शरण में आया हूँ। आप मुझे सेवक के रूप में नियुक्त करें।।

**ईश्वरं प्रणमेभित्यं ततः पूर्वं गुरुं नमेत्।**
**यतोहि ईशप्राप्त्यर्थं असौ हि मार्गदर्शकः ॥०२॥**

भावार्थः - शिष्य प्रतिदिन परमात्मा को नमस्कार करे, परन्तु उससे भी पहले गुरु को नमस्कार करे क्योंकि ईश्वर की प्राप्ति के लिए निश्चित रूप से वे ही मार्गदर्शक हैं।

**आत्मज्ञानी भवेद् यस्तु भवेच्च शास्त्रपारगः।**
**उत्कृष्टैश्च गुणैर्युक्तो सद्गुरुभिधीयते ॥०३॥**

भावार्थः - जो (गुरु) आत्मज्ञानी, शास्त्रों के तत्त्व को जानने वाला तथा उत्कृष्ट गुणों से युक्त होता है वह सद्गुरु कहलाता है।

**संसारद्रुममारूढ़ा लभन्ते नरकार्णवम्।**
**तस्माद्धिं पायते यस्तु तस्मै श्रीगुरवे नमः ॥०४॥**

भावार्थः - संसार रूपी वृक्ष पर चढ़े हुए लोग नरकरूपी समुद्र को प्राप्त करते हैं अर्थात् समुद्र में गिर जाते हैं, और उस नरकरूपी समुद्र से जो उन लोगों की रक्षा करते हें, उन गुरुदेव को प्रणाम है।

**गुरोः कृपा प्रसादेन शुष्यन्ते दुःखसागराः।**
**शिष्य तेन प्रसादेन प्राप्नोति आत्मसम्पदाम् ॥०५॥**

भावार्थः - गुरु के कृपारूपी प्रसाद से दुःखरूपी सागर सूख जाते हैं और शिष्य उसी कृपा रूपी प्रसाद से आध्यात्मिक क्षेत्र में आत्मसम्पदा को प्राप्त करता है।

**संगृह्य छन्दसां सारं पुष्पेभ्य षट्पदा इव।**
**गुरुः बंध्यति शिष्येषु, शिष्याणां प्रतिपत्तये ॥०६॥**

भावार्थः - जिस प्रकार भौंरा फूलों से सारतत्व ग्रहण कर लेता है, उसी प्रकार गुरु वेदों सा सार ग्रहण करके शिष्यों की उन्नति के लिए उनमें बाँट देता है।

**मिथ्यावादी गुरूस्त्याज्यः ज्ञानहीनश्च कृत्रिमः।**

**स्वीयां शान्तिं न जानाति परशान्तिं करोति किम् ॥०७॥**

भावार्थः – शिष्य उस गुरु का त्याग कर देवे जो कि मिथ्या भाषण करने वाला, ज्ञान से हीन तथा बनावटी हो। क्योंकि जो स्वयं की शान्ति नहीं जानता, वह दूसरों को क्या शान्ति देगा।

**उत्तमस्तु भवेच्छिष्टाः पूतः खनिजतैलवत्।**
**गुरूपदेशस्फुलिङ्गं गृह्णाति दूरतोऽपि यः ॥०८॥**

भावार्थः – जो उत्तम शिष्य है वह डीजल या पेट्रोल की तरह है। जिस प्रकार डीजल यदि अग्नि से दूर हो तो भी वह उसे ग्रहण कर लेता है, उसी प्रकार वह शिष्य भी गुरु के उपदेश रूपी चिंगारी को दूर से ही ग्रहण कर लेता है।

**गुरुं त्यजति यः शिष्य जीवन्नपि स स्यान्मृतः।**
**मन्त्रं त्यजति यः शिष्य दारिद्रयं तस्य जायते ॥०९॥**

भावार्थः – जो शिष्य गुरु का त्याग कर देता है, वह शिष्य जीता हुआ भी मरे के समान है और जो शिष्य मन्त्र का त्याग कर देता उसे दरिद्रता आ जाती है।

**पुनर्यदि भवेज्जन्म मम भारतभूतले।**
**शरणं तव गच्छेयं, कृपा भवतु हे गुरो! ॥१०॥**

भावार्थः – इस भारत की धरा पर यदि मेरा पुनः जन्म हो तो, हे गुरो! मैं आपकी कृपा से आपकी ही शरण को प्राप्त करूँ, ऐसी कृपा मुझ पर करें।

# संस्कृतस्य महत्त्वम्

**रमेश चन्द**

अनुक्रमाङ्क : 92

भारतीयभाषाणां जननी संस्कृतं भवति। सर्वाभारतीयभाषायाः संस्कृतभाषया सह घनिष्ठं सम्बन्धं भजन्ते। अतः भारतीयदर्शनस्य, धर्मस्य संस्कृतेश्च भाषारूपेण संस्कृतस्य महत्त्वमनिर्वचनीयमस्ति।

विश्वस्य प्राचीनतमा भाषा भारतस्य अमूल्यनिधिश्च भवति। बौद्धिकभावात्मकाध्यात्मिका कलात्मकनिष्पत्तेः स्रोतः निरन्तरधाराः संस्कृतभाषा वर्त्तते। अस्याः महत्त्वमेव विशदीकर्त्तुं प्रयते।

1. **ऐतिहासिकमहत्त्वम् :-**

संस्कृतभाषायाः साहित्ये प्राचीनेतिहासः सन्निहितो वर्त्तते। अन्य स्त्रोतसामाधारेण लिखितः इतिहासः काल्पनिकः स्वान्नाम परन्तु न संस्कृतसाहित्ये विद्यमानानां तथ्यानामधारेण लिखित इति। यथा– कौटिल्यस्य अर्थशास्त्रे, मनुसृतौ, याज्ञवल्कयस्मतौ च तत्कालीनसमाजस्य इतिहास उपलभ्यते। पुराणेषु उपनिषत्सु, रामायणे, महाभारते, महाकाव्येषु बौद्धानां त्रिपिटकसाहित्ये जैनानामार्षसाहित्ये च भारतस्य प्राचीनेतिहासः विद्यते।

2. **सांस्कृतिकमहत्त्वम् :-**

अस्माकं सभ्यता संस्कृतिश्च वेदेभ्यः स्मृतिभ्यः पुराणेभ्यश्च निःसृता भवति। तस्याः स्त्रोतः संस्कृतभाषा भवति। अस्माकं सभ्यता च संस्कृतपतन्येषु विद्यते। संस्कृतभाषायाः माध्यमेन भारतीयसंस्कृतिः अनूचाना प्रवर्त्तते।

शोडशः संस्कारा उच्चदार्शनिकविचाराः आध्यात्मिकज्ञानं, नैतिकता च संस्कृते समाविष्टाः सन्ति।

3. **राष्ट्रियमहत्त्वम्** -

भारतस्य एकता, अखण्डता च संस्कृते निहिता वर्त्तते। भारते अनेकेषु बाह्यभेदेषु जनानां संस्कृतिः समाना वर्त्तते। कदाचित जनाः साम्प्रादायिकता, प्रान्तीयता, भाषा इत्यादि विषयेषु कलहं कुर्वन्ति। ईर्ष्या-द्वेषः-घृणा-इत्यादिदुर्भावना उत्पद्यन्ते। तादृशपरिस्थितौ संस्कृतभाषायाः राष्ट्रियं महत्व सहायकं भवति।

**उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्ष तद् भारतं नाम भारती यत्र सन्तेतिः।।** इति

4. **अन्तराष्ट्रियमहत्त्वम्** -

संस्कृतभाषायाः न केवलं राष्ट्रिय महत्वं वर्तते अपितु अन्राष्ट्रियमहत्वमपि वर्त्तते। उदारचरितानान्तु वसुधैव कुटुम्बकम्" इत्येतमादर्शं भारतीय प्राचीनकालादेव प्रादर्शयन्।

**देवस्य पश्य कार्य न ममार न जीर्यति"।**
**केवलाधो भवति केवलादी"।**
**सत्यमेव जयते नानृतम्"।**

5. **साहित्यकं महत्त्वम्** -

वैदिकसंस्कृते काव्यरचनैव प्रधाना आसीत्। भारतीयभाषासु साहित्येन च न केवलं संस्कृतभाषायाः जालमेव अपितु संस्कृत साहित्यस्य विचारधाराः ध्वन्यलङ्कारादेयश्च अर्न्तभवन्ति। संस्कृतसाहित्यस्य उत्कृष्टरचना विश्वविख्याताः सन्ति।

यथा-

कालिदासस्य-अभिज्ञानशाकुन्तलम्

कालिदासस्य - रघुवंशम्

कालिदासस्य - कुमारसम्भवम्

भवभूतेः - उत्तररामचरितम्

भारवेः - किरातार्जुनीयम् इत्यादि।

6. **कलात्मकं महत्त्वम्** -

प्राचीनभारते विज्ञानेन साकं कलानामपि उन्नतिः आसीत्। मूर्त्तिकलायाम्, चित्रकलायाश्च भारत विश्वविख्यातम् आसीत्। सिन्धुघाटयाः अवशेषेषु एतासां कलानाम् उन्नतेः प्रमाणानि विद्यन्ते। एतदतिरिक्ताः - नाट्यकाला, अभिनयसामग्री, वेशभूषा, संगीत, नृत्यम् इत्याद्याः चतुःषष्ठिकलाः संस्कृत ग्रन्थेषु वर्णिता।

7. **राजनैतिकमहत्त्वम्** -

प्राचीनभारते संस्कृतस्य राजनैतिकमहत्त्वदपि वर्त्तते। कौटिल्यस्य अर्थशास्त्रं मनुस्मृतिः इत्यादि राजनितिपरकग्रन्थाः संस्कृतसाहित्ये लभ्यन्ते।

एतेन विवेचनेन स्पष्टं भवति यत् भारतीयसंस्कृतिः भारतीयोन्नतिश्च संस्कृतसाहित्ये सुरक्षिता अस्ति। संस्कृतभाषा द्वारा भारतस्य वास्तविकस्वरूपं ज्ञातुं शक्यते। अतः तदर्थं पुनः संस्कृतस्य उदाहरार्थम आवश्यकः प्रयत्न कर्तव्यः।

# कर्मणि एव अधिकारः

राई किशोरी दास

शिक्षाशास्त्री द्वितीयवर्षम्

शब्दविषयकः अनुभवः शाब्दबोधः। आप्तवाक्यं शब्दः। यथार्थवक्ताः आप्तः। बोधः अर्थात् अधिगमः। अतः शब्दविषयकः बोधः / अधिगमः 'शाब्दबोधः'। शक्तिलक्षणान्यरसम्बन्ध ेन पदजवय पदार्थस्मृतित्वावच्छिन्न कारणतानिरूपित कार्यत्वं शाब्दबोधः।"

शाब्दबोधे घटकानि तत्त्वानि

(1) कारणम्  (2) सहकारिकारणम्  (3) अवान्तरव्यापारः

1. पदज्ञानं कारणम्। अर्थात् शाब्दबोधे कारणम् अपेक्षते।
2. आकाङ्क्षा-योग्यता-सन्निधिः तात्पर्याणां प्रत्येकं ज्ञानं सहकारीकारणम्।
3. वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितः अवान्तरव्यापारः।

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।"**

फलस्य व्यापारस्य च वाचकः धातुः तथा आश्रयस्य (फलाश्रयः कर्म, व्यापाराश्रयः कर्त्ता) वाचकः तिङर्थः भवति। फले व्यापारः प्रधाानः भवति। तिङर्थः कर्त्ता। कर्मे व्यापारे विशेषणं भवति।

वैयाकरणानां मते शाब्दबोधः -

- धात्वर्थः कलव्यापारौ।
- तिप्सादि तिङ्प्रत्यायाः भवति आख्यातः।

अतः आख्यातार्थ-तिङर्थः। कर्त्ता कर्म च आश्रयः भवति।

- कर्त्ता, कर्म, क्रिया च इत्यस्मात् निष्पन्नः शाब्दबोधे व्यापारः मुख्यः भवति।

यथा - देवदत्तः ओदनं पचति।

**शाब्दबोधः** - देवदत्ताभिन्नैककर्तृक-ओदनकर्मक-वर्तमानकालिकः विक्लित्युनकूलो व्यापारः।

अत्र कर्त्ता, कर्म, क्रियाणां च निष्पन्नशाब्दबोधः भवति। अतः शाब्दबोधे व्यापारः मुख्यः भवति।

नैयायिकानां मते शाब्दबोधः -

- धात्वर्थः फयाव्यापारौ।

- आख्यातार्थः (तिङर्थः) कृति (यत्न) भवति।
- शाब्दबोधे प्रथमान्तार्थः मुख्यविषयकः भवति।

यथा- देवदत्तः ओदनं पचति।

**शाब्दबोधे** - ओदनकर्मक विभिन्नत्यनुकूलव्यापारानुकूलकृतिमान् देवदत्तः।

अत्र प्रथमान्तार्थः देवदत्तः प्रधानः भवति, अतः प्रथमान्तमुख्यकः शाब्दबोधः भवति।

अत्र वैयाकरणानां मतवद् धात्वर्थः समानः भवति, परन्तु आख्यातार्थः कृति प्रथमान्तार्थस्य मुख्यतायाः च अनयोः मध्ये भेदः भवति।

मीमांसकानां मते शब्दबोधः -

- धात्वर्थः केवलं फलम्।
- आख्यातार्थः व्यापारः भवति।
- आश्रयः (कर्त्ता, कर्म) लक्षणायाः अस्थितिः भवति।

यथा- देवदत्तः पचति।

**शाब्दबोधेः** - देवदत्ताभिन्नैककर्तृक वर्तमानकालिक विक्लिव्यनुकूलव्यापारः।

अत्र वैयाकरणानां मतानां सम एव भवति। अत्रापि व्यापारमुख्यकः शाब्दबोधः, परन्तु किञ्चिदेव अन्तरम्।

- व्यापार धात्वर्थः न भवति, अपितु आख्यातार्थः
- आश्रयः आख्यातार्थः न भवति, अपितु लक्षार्थः अर्थात् आक्षेपार्थः भवति।

वैयाकरणानां मतेऽपि भेदः -

**प्राचीनवैयाकरणानां मते** -

(1) धात्वर्थः फलव्यापारौ भवति।

(2) क्रिया कर्तृवाच्ये भवतु उत् कर्मवाच्ये द्वयोः क्षत्रयोः मध्ये शब्दबोधव्यापारः एव मुख्यविशेषकः भवति।

**नवीनवैयाकरणानां मते** -

(1) धातोः फले व्यापारे च पृथग् प्रथग् खण्डशः शक्तिः स्वीक्रियते।

(2) कर्तृवाच्ये - शाब्दबोधे व्यापारः एव प्रधानम्।

(3) कर्मवाच्ये - शाब्दबोधे फलमेव प्रधानम्।

यथा - कर्तृवाच्ये - देवदत्तः ओदनं पचति।

शाब्दबोधेः -देवदत्ताभिन्नैकर्तृकः ओदनकर्मकः वर्तमानकालिक विक्लित्यनुकूलव्यापारः।

कर्मवाच्ये - देवदत्तेन ओदनः पच्यते।

शाब्दबोधेः - देवदत्तवृत्तिः वर्तमानकालिक व्यापारजन्य ओदननिष्ठ विक्लितिः।

शैक्षिकनिहितार्थः -

- शाब्दबोधेन वाक्यस्य सम्पूर्णस्वरूपस्य ज्ञानं भवति।
- अनेन वाक्ये निहित कर्त्ता-क्रिया-कर्म च सर्वेषां ज्ञानं सम्यक् तथा भवति।
- अनेन लेखन कौशले वैशिष्ट्यता आगच्छति।

- शाब्दबोध द्वारा लेखन-कौशलस्य तथा व्याकरणेऽपि दक्षता आगच्छति।

# अधिगमः

**रस्मिता धनी**
शिक्षाशास्त्री द्वितीयवर्षम्

**अधिगमस्यार्थः -**

अधिगमः व्यापकं जीवनपर्यन्तं सततप्रचाल्यमाना काचित् गतिशीला प्रक्रिया वर्तते। अधिगमं जर्मनभाषायां Lernen इति कथ्यते तथा आङ्गलभाषायां Learning इति कथ्यते। मनुष्यः जन्मतः मृत्युं यावत् यत्किमपि शिक्षत्यैव। समायोजनद्वारा प्राजानुभवमाध्यमेन सः अधिकाधिकं लाभान्वितं भवति। इमां प्रक्रियां मनोविज्ञाने अधिगमः इति कथ्यते।
उदाहरणार्थं - शिशुं सम्मुखे यदा ज्वलन्तं दीपकं नीयते तदा सः तस्य ज्वालां प्राप्तुं प्रयासं करोति। अस्मिन् प्रयासे तस्य हस्तः ज्वलति तथा सः स्वहस्तं बहिरानयति। पुनः यदा तस्य सम्मुखे प्रज्वलितं दीपं नीयते तदा सः स्वीयानुभवानुसारेण दीपकं न स्पृशति। अपितु तस्मात् दुरं गच्छति। इमं विचारमेव स्थितिं प्रति प्रतिक्रियाकरणम् इति उच्यते। अन्यशब्देषु कथितुं शक्यते यत् अनुभावाधारेण बालकस्य स्वाभाविक- व्यवहारे परिवर्तनमायाति।

**अधिगमस्य परिभाषाः -**

(1) वुडवर्थ महोदयानुसारं - अधिगमः विकासस्य प्रक्रिया वर्तते।"
(2) स्किनर महादेयानुसारं - अधिगमः व्यवहारे उत्तरोत्तरसामञ्जस्यस्य प्रक्रियां।
(3) गेट्स महोदयानुसारं - अनुभवेन व्यवहारे जायमानं परिवर्तनम् अधिगमः"।

अधिगमस्य नियमाः -

Thorndine महोदयेन केचन नियमाः अन्वेषितं ते अधोलिखिता भागद्वयं वर्त्तते।

(1) **मुख्यनियमाः -**
तत्परतायाः नियमः।
अभ्यासस्य नियमः।
प्रभावस्य नियमः।

(2) **गौणनियमाः -**
बहु अनुक्रिया सिद्धान्तः।
**मानसिकस्थितेः नियमः।**
**आंशिकक्रियायाः नियमः।**
**समानतायाः नियमः।**
**साहचर्य परिवर्तनस्य नियमः।**

**मुख्यनियमाः -**

**तत्परतायाः नियमः** - अस्य नियमस्यानुसारं यदा कोऽपि व्यक्तिः किमपि कार्यं कर्त्तुं प्रथमतः सज्जः भवति तदा तत् कार्यं शीघ्रमेव अधिगचदति। यदा व्यक्तिः कार्यकरणार्थं

सुसज्जितः न भवति अथवा शिक्षणे इच्छा न भवति तर्हि सः खिन्नः भवति एवञ्च तस्य अधिगमगतिः अपि मन्दः भवति।

**अभ्यासस्य नियमः** – अभ्यासस्य नियमानुसारं मनुष्यः यां क्रियां बारम्बारं करोति तां क्रियां शीघ्रमेव अधिगच्छति। यथा– गणितस्य प्रश्नानामभ्यासकरणम्।

प्रभावस्य नियमः – अस्य नियमानुसारं यथा क्रियया मनुष्यस्य जीवने सुष्ठुप्रभावः भवति अथवा सुखशान्तिं प्राप्नोति तां क्रियामाधिगन्तुं सः प्रयतते। एवञ्च यया क्रियया तस्योपरि कुप्रभाव भवति तर्हि सः तां त्यजति।

**गौणनियमाः** –

**बहु अनुक्रिया सिद्धान्तः** – अस्य नियमानुसारं व्यक्तिसम्मुखे यदा कापि नूतना समस्या आगच्छति तर्हि सः तां निवारेणाय विभिन्नप्रतिक्रियामाध्यमैः समाधानम् अन्वेषति। सः प्रतिक्रियां तावत् पर्यन्तं करोति यावत् पर्यन्तं समस्यायाः सुसमाधानं न प्राप्नोति।

**मानसिकस्थितेः मनोवृत्तेः वा नियमः** – अस्य नियमानुसारं यदा कोऽपि व्यक्तिः अधिगन्तुं मानसिकरूपेण सुसज्जितः भवति। तदा सः शीघ्रमेव अधिगच्छति।

**आंशिकक्रियायाः नियमः** –

अस्य नियमानुसारं व्यक्तिः किमपि समस्यां साधयितुम् अनेकाः क्रियाः प्रयत्नविस्मृतिश्च इत्याधारेण करोति। सः स्वीयान्तदृष्टेः उपयोगं कृत्वा आंशिकक्रियाणां सहायतामाध्यमेन समस्यायाः समाधानं अन्वेषति।

**समानतायाः नियमः** –

समानतायाः नियमानुसारं यदि आगतसमस्या अथ च मनुष्यस्य पूर्वानुभवमध्ये परिस्थितिर्मध्ये वा साम्यता दृश्यते चेत् समस्यायाः आगमने मनुष्यस्य अनुभवः स्वतः एव स्थानान्तरितं भूत्वा अधिगमे साहाय्यं करोति।

**साहाचर्यपरिर्वनस्य नियमः** –

अस्य नियमस्यानुसारं व्यक्तिः प्राप्तज्ञानस्य उपयोगः अन्येषु परिस्थितिषु अथवा सहचारी उद्दीपकं प्रति अपि करोति। यथा – भोजनं दृष्ट्वा कुक्कुरस्य मुखात् स्वतः एव लारस्त्राव निपतति। परन्तु कालानन्तरं भोजनद्रोणीं दृष्ट्वा एव लारस्त्रावः तस्य मुखान् निर्गच्छति।

# संसर्गजा दोषगुणा भवन्ति

**शुभश्री जेना**

अनुक्रमाङ्कः : 91

सतां सज्जनानां सङ्गतिः सत्सङ्गति रुच्यते। मानवजीवने सत्सङ्गत्याः प्रभावः सर्वदा परिलक्ष्यते। सद्भिजनैः सह निवसन् मनुष्यः स्वयं सद्गुणोपेतः प्रकृतिसरलः उदात्तभावगुणयुत्कः भवति। सत्सङ्गत्या मनुष्यः परमोन्नति प्राप्नोति तस्य प्रतिष्ठा प्रभावः कीर्तिश्च वर्धते। अतः एवोक्तम्–

**सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम्।**

**सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत्॥**

मनुष्यः यादृशानां जनानां सङ्गतौ वसति सः तादृश एव सञ्जायते। सत्सङ्गत्या सः सज्जनाः शिष्यः विनीतः व्यवहारकुशलश्च भवति। दुर्जनसङ्गाच्च मनुष्यः स्वयं दुर्जनः दुर्गुणोपेतः दुश्चारितः दुर्मतिश्च जायते। अत एव संसर्गजा दोषगुणा भवन्ति इत्याभाणकं प्रसिद्धमेव। असतां सङ्गं सर्वथा परित्यज्य वयं सर्वदा सतां सङ्गगति कुर्याम।
सत्सङ्गतिप्रभावेण शुद्रोऽपिज जनः समुन्नतिं याति, प्रतिष्ठां च लभ्यते। तथाहि-

**कायः काद्यनसंसगतिद धत्रे मारक्तीं द्युतिम्।**
**तथा सत्सन्निधानेन मूर्खोयाति प्रवीणताम्॥**

अपि च -

**यथोदयगिरेर्द्रव्यं सन्निकर्षेण दीप्यते।**
**तथा सत्सन्निधानेन हीनवर्णोऽपि दीप्यते॥**

# सर्जनात्मकता (Creativity)

**सीना मीना**
शिक्षाशास्त्री द्वितीयवर्षम्

आधुनिक युग वैज्ञानिक युग है इसलिए मनोवैज्ञानिकों ने उस अद्भुत योग्यता एवं शक्ति के सम्बन्ध में शोध करने के लिए आकर्षित हुआ। व्यक्ति को प्रतिदिन नये आविष्कार करने एवं कठिन समस्याओं का समाधान ढूँढने तथा जीवन को सुखमय बनाने के लिए सहयोग प्रदान करती है। इसी को सृजनात्मकता कहते हैं।

सृजनात्मकता व्यक्ति की उस क्षमता को कहते हैं जिससे वह कुछ ऐसी नवीन वस्तुओं, रचनाओं या विचारों को पैदा करता है जो नया होता है एवं जो उसे पहले से ज्ञात नहीं होता है। सृजनात्मकता एक ऐसी प्रक्रिया है जो लक्ष्य-निदेशित (goal-directed) होती है इसमें व्यक्ति को लक्ष्य निश्चित रूप से पता होता है और उसका प्रत्येक व्यवहार इसी लक्ष्य से संबंधित होता है।"

सृजनात्मकता में व्यक्ति कुछ नया एवं भिन्न चीजों का निर्माण करता है। सृजनात्मकता प्रायः सभी प्राणियों में पाई जाती है। यदि माता-पिता सहीं ढंग से बच्चे का पालन-पोषण करके या अध्यापक बच्चे को अच्छी एवं उपयोगी शिक्षा देकर लाभकारी कार्य करें तो हम कह सकते हैं कि इनमें पर्याप्त मात्रा में सृजनात्मकता विद्यमान है।

**सृजनात्मकता का अर्थ** (Meaning of Creativity)

सृजनात्मकता एक विशेष ढंग से चिंतन (thinking) करने का तरीका होता है। उसे ही सृजनात्मकता या रचनात्मक चिंतन कहते हैं। सृजनात्मकता एक ऐसी योग्यता है जो किसी समस्या का समाधान करने के लिए नवीन विधियों एवं स्थितियों का सहारा लेती है। यह समस्त प्राणियों में कम या अधिक पाई जाती है। सृजनात्मकता में अनेक योग्यताओं या गुणों तथा समस्याओं के प्रति सजगता विचारशीलता में गति, लचीलापन, मौलिकता, नवीनता

के लिए परिवर्तन जिज्ञासा का मिश्रण होता है जिससे व्यक्ति रचनात्मक उत्पादनों (Constructive production) को करता है।"

**परिभाषा -**

थर्स्टन - (Thurston 1955) इनका मत है कि कोई भी वह क्रिया सृजनात्मकता है जिसका तुरन्त समाधान प्राप्त हो जाये क्योंकि इस प्रकार का हल विचारक के लिए सदैव नवीनता लिये हुए होता है।"

सृजनात्मकता (Creativity) चिंतन (thinking) का एक विशिष्ट रूप है जिसे सृजनात्मक या रचनात्मक चिन्तन (Creative thinking) भी कहा जाता है। यह बुद्धि से पृथक् सम्प्रत्यय है, क्योंकि बुद्धि में चिन्तन के अलावा भी अन्य मानसिक क्षमताएँ सम्मिलित होती है।

सृजनात्मक प्रक्रिया के सोपान (Steps in Creative Process)

शिक्षाशास्त्रियों एवं शिक्षा मनोवैज्ञानिकों ने सृजनात्मकता प्रक्रिया को एक जटिल प्रक्रिया (Complex Process) माना है। यह एक ऐसी प्रक्रिया है जिसमें कई सोपान या चरण (Steps) सम्मिलित होते हैं। इस प्रक्रिया में निम्नांकित मुख्य सोपान (Steps) सम्मिलित होते हैं।

(1) समस्या का प्रत्यक्षण
(2) समस्या को परिवर्तित करना।
(3) निर्णय को निलम्बित करना।
(4) उद्भवन प्रभाव।
(5) किसी एक विचार में बँध जाना।
(6) परिणाम की अटकलबाजी।
(7) उत्तम निष्कर्ष का चयन।
(8) अपने निर्णय को सुसाध्य करने की इच्छा।
(9) अनिश्चितता को स्वीकार करना।

**सृजनात्मक के पहलू** (Aspects of Creativity)

सर्जनात्मकता के अनेक पहलुओं (Aspects) या तत्वों (element) या विमाओं (dimensions) का अध्ययन गिलफोर्ड (Guilford, 1967) द्वारा निम्नलिखित बिन्दु हैं-

(1) धाराप्रवाहिता (Fluency)
(2) लचीलापन (Flexibility)
(3) मौलिकता (Originality)
(4) विस्तारण (Elaboration)

**सृजनात्मकता का शिक्षण** (Teaching of Creativity)

सृजनात्मकता शिक्षण के विषय में कुछ मनोवैज्ञानिकों जैसे जैक्सन एवं मेसिक, टारेन्स (1972) द्वारा दिये गये अध्ययनों से यह समझ में आता है कि सृजनात्मकता एक ऐसी प्रक्रिया है जिसको शिक्षकों द्वारा अन्य विषयों के समान पढ़ाया जा सकता है अर्थात् सृजनात्मकता का शिक्षण संभव है। विभिन्न शोधों से यह स्पष्ट होता है कि शिक्षक कक्षा में कोई विशिष्ट विधि, प्रविधि अपनाकर छात्रों की सृजनात्मकता को बढ़ा सकते हैं। कक्षा में प्रयोग करके शिक्षक बालकों में सृजनात्मकता को बढ़ावा दे सकते हैं। यथा–

(1) अध्यापकों को बालकों में आत्माभिव्यक्ति की आदत डालनी चाहिए।

(2) नए विषयों को, विचारों के मौलिक स्त्रोतों (Sources) से छात्रों को अवगत कराना चाहिए।

(3) अध्यापक को मस्तिष्क-झंझावाती प्रविधि का उपयोग करना चाहिए।

(4) विवादात्मक प्रश्नों को जान-बूझकर पूछना चाहिए।

(5) वस्तुओं एवं विचारों का जोड़-तोड़ करने का काम बालकों के ऊपर होना चाहिए।

(6) सृजनात्मक माहौल जिसमें बालक निसंकोच एवं आराम से प्रश्नों का समाधान कर सके।

ऊपर दिये गए तथ्यों से यह पता चलता है कि अनेक प्रविधियों को अपनाकर अध्यापक चाहे तो छात्रों में उचित मात्रा में सृजनात्मकता उत्पन्न कर सकते हैं।

**निष्कर्ष:** – सृजनात्मकता में हमने देखा कि किस प्रकार एक अध्यापक विभिन्न विधियों प्रविधियों का विकास करके बालकों में पर्याप्त मात्रा में सृजनात्मकता उत्पन्न कर सकता है। यदि शिक्षक की भूमिका रहे तो किस प्रकार इसको और अधिक बढ़ाया जा सकता है।

(1) एक मजबूत पाठ्यक्रम बनाकर उसे एक निर्धारित समय-सीमा के अन्दर पूरा करने का अध्यापक को ज्यादा से ज्यादा प्रयत्न करना चाहिए। प्राय: हम देखते हैं कि किसी तरह से शिक्षक पाठ्यक्रम तो तैयार कर लेते हैं किन्तु उसे समय-सीमा के भीतर समाप्त करने की योजना नहीं बनाते हैं। उस पर अधिक ध्यान नहीं देते हैं इससे बालकों में लापरवाही बढ़ती है और सृजनात्मकता का विकास कमजोर हो जाता है। विद्यालय को शिक्षकों के प्रशिक्षण में अधिक योग्य शिक्षाशास्त्रियों की उपलब्धि करवानी चाहिए।

उपर्युक्त विचारों से यह स्पष्ट है कि शिक्षक एवं विद्यालय का महत्व सृजनात्मकता में बहुत है। इनके प्रयासों से बालकों में सृजनात्मकता पर्याप्त मात्रा में बढ़ सकती है।

# सद्ज्ञान

**धानेश्वरी साहू**
शिक्षाशास्त्री-द्वितीय वर्ष

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्विधां प्राहुः साक्षात् धामेस्य लक्षणम्।।**

मानवीय व्यक्तित्व के तीन आयाम सर्वविदित है- शरीर, मन एवं आत्मा शरीर को पोषण देने के लिए आहार की प्राणवायु की आवश्यकता पड़ती है। अन्न जल एवं वायु न मिले तो शरीर को लंबे समय तक जीवित रख पाना संभव नहीं हो पाता है। मन को को पोषण देने के लिए सद्विचारों की सरभावनाओं की जरूरत होती है तो आत्मा की आवश्यकता सद्ज्ञान से ही पूरी पाती है। सद्ज्ञान का संबल मिलने पर मनुष्य के गुण-कर्म एवं स्वभाव को पोषण मिल पाता है। गुण, कर्म व स्वभाव की उत्कृष्टता की आत्मा को पोषण देती है व समुन्नत जीवन की आधाार शिला रखती है।

जीवन में मनुष्य को चहि कितना कुछ भी उपलब्धा करा दिया जाए, तमाम सुख, अकल्पनीय सुविधाओं के अंबार लगा दिए जाएँ परन्तु इन सबके बाद भी यदि सद्ज्ञान उपलब्धा न हो सका तो जीवन में एक बड़ी भारी रिक्तता का अनुभव होता है। इसी कारण समस्त सुविधाओं के होते हुए भी युवराज सिद्धार्थ सर्वस्व त्यागकर सद्ज्ञान प्राप्ति की राह की निकल पड़ते हैं महाराज भर्तृरहि, वैराग्य को प्राप्त होते है एवं राजा जनक आत्मज्ञान की पाते है हैं। सद्ज्ञान का अवलंबन ही मनुष्य को जीवन में ऊँचा उठाता एंव आगे बढ़ाता है। सद्ज्ञान की प्राप्ति मनुष्य को सन्तोष, सम्मान एवं समुन्नति के ऐसे आभूषणों से नवाजती है कि जिसके आगे स्वर्ग की संपदा भी तुच्छ नजर आती हैं।

सद्ज्ञान की प्राप्ति के लिए मार्ग तो अनेकों है, परन्तु स्वाधयाय एवं सत्संग का पथ कुछ ऐसा है कि इसको अपनाने वाले निज जीवन में महानता के अधिकारी बनते हैं। सचपूछा जाए तो मानवीय महानता का सारा श्रेय सद्ज्ञान को ही देने की आवश्यकता है, क्योंकि उसकी प्राप्ति ही मनुष्य के जीवन को अनुकरणीय बनाती हैं। सद्ज्ञान पारस के पत्थर की तरह हैं, जिसे स्पर्श करने वाले अपने जीवन को स्वर्णिम सौभाग्य शाली बनाकर रहते है। जिसे सद्ज्ञान न मिल सका वह जन्म-जन्मातरो तक पतन व पराभव की वीथियों में भटकता रहता है, जबकि सद्ज्ञान प्राप्त कर लेने वाले अपने जीवन को एक प्रेरणा में परिवर्तित कर देते है। सद्ज्ञान की उपलब्धि ही मनुष्य जीवन का श्रेष्ठतम सौभाग्य है।

# मूल्यशिक्षायाः स्वरूपम्

**मानसी प्रधान**

मूल्यं जीवनस्य सारतत्त्वं वर्तते। यदि जीवने मूल्यानि नैव सन्ति, तर्हि तज्जीवनं निरर्थकमिति, वस्तुतः मूल्यमेव तदेव तत्वमस्ति, येन मानवः प्राणिषु श्रेष्ठः इति। यदि मूल्यं नास्ति, तर्हि तस्य वस्तुनः, पदार्थस्य, विचारस्य, मानवस्य य किमपि महत्वमेव न भवति। अतएव मानवजीवनं मूल्यमयं कतुं बालेभ्यः विद्यालयीशिक्षायां मूल्यशिक्षा नूनमेव प्रदेया तर्हि विद्यालये प्रदीयमानायां मूल्यशिक्षायां के के विषयाः स्युः? सा च शिक्षा कीदृशी स्यात्? विषयेऽस्मिन् शिक्षाशास्त्रिणः चिकीर्षन्ति यत् पाठयक्रमनिर्धारणकाले मूल्यशिक्षायाः अध ोलिखिताः विषयाः पाठयक्रमे समायोजनीयाः। येषाम् अधयापनेन बालकानां जीवनं मूल्ययुक्तं भविष्यति।

तद्यया–

1. सदाचारपालनम् 2. सत्यपालनम् 3. अहिंसापालनम् 4. धर्माचरणम् 5. परोपकारः 6. विश्वबन्धुत्वभावनायाः विकासः

1. **सदाचारपालनम्** – आचारः परमो धर्मः इति सिद्धान्तम् आश्रित्य सदाचारः सर्वोत्तमं तप इति पालनीयः। जीवने यदि विद्यते किंचन शाश्वतं तत्त्वम् तहि तद् वृतत्त्वम् एव सदाचारपालने ब्रह्मचर्यस्य महत्त्वं वर्तते एवं च चरित्ररक्षा शीलरक्षा चेत्यादि सदाचारपालनेन एव भवन्ति। यथोक्तं–

**वृतं यत्नेन संरक्षेत् वित्तमेति च याति च।**
**अक्षीणौ वित्ततः क्षीणौ वृत्ततस्तु हतौ हतः॥**

2. **सत्यपालनम्**– सवेदा सत्यभाषणं करणीयम् मिथ्याभाषणं कदापि नैव करणीयम्। यतोहि सत्यमेव धर्मस्य मूलाधारो वर्तते भाषणे सत्यं, विचारे सत्यं, कर्मणी च सत्यं स्वीकृतं चेत् ईश्वरस्य प्राप्तिः अवश्यमेव भवेत्। सत्यस्य व्यवहारविषये संस्कृतसाहित्ये इत्यं प्राप्यते। यथा–

**सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्**
**प्रियंच नानृतं ब्रूयाद् एषः धर्मः सनातनः।**

अहिं**सापालनम्**–सर्वविधहिंसायाः परित्याग एव अहिंसा। समस्तजीवान् प्रति सद्भावनायाः प्रदर्शनमेत अहिंसा। भारतीयसंस्कृतेः मूलाधारः अहिंसा भवति। अहिंसायाः परिपालनेन आत्मोन्नतिः राष्ट्रोन्नतिश्च जायते। पतंजलिना उक्तम्– अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः।

**धर्माचरणम्**– धर्मः एव जीवनस्य सारभूतः। धर्मः जीवनरक्षकः इत्युच्यते अत एव ध र्माचरणं करणीयम्। यदि वयं धर्मरक्षां कुर्मः तर्हि धर्मोऽपि अस्मान् रक्षति अतः जगति धर्मः एव सर्वोत्कृष्टः।

**विश्वबन्धुत्वभावनायाः विकासः**– इदग जगत् सुखदुःखात्मकञ्च भवति शिक्षया बालकेषु

इदृश्याः भावनायाः विकासः सम्पादनीयः, यया ते अन्यजनान् आत्मावदनुभवेयुः। इदं मम, अयं निजः, ते न मदीयाः इत्यादि भावना अपाकरणीयाः जगतः सर्वेजनाः मम कुटुम्बिजनः इति विचिन्त्य सर्वेषा साहा"यं करणीयम् हितापदेशेऽपि उक्तम् यथा-

**अयं निजः परावेति गणनालद्युचेतसान्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्।**

निष्कर्षरूपेण अस्माभिः वक्तुं शक्यते यत् पाठ्क्रमस्य निर्माणं तादृशरीत्या करणीयम्, येन राष्ट्रस्य भाविनागरिकाणां जीवनं मूल्ययुक्तं भवेत्।

# अनुवादविधिः

**अनिषा साहु**
शिक्षाशास्त्री- द्वितीय वर्ष

संस्कृतशिक्षणविधिषु अनुवादशिक्षणं प्रमुखं वर्तते। ''अनु पश्चात् वदति इति अनुवादः'' एकस्याः भाषायाः अन्यस्यां भाषायां रूपान्तरीपकरणम् अनुवादः इत्युच्यते। राकस्य विषयस्य तदनुगुणं तदनुसारं च रूपान्तरीकरण अनुवादं इत्युच्यते अपि अनुवादशिक्षणे त्रिणि रूपाणि अवलोक्यन्ते-

1. पद्यनुसारं अनुवादः (अक्षरशः अनुवादः)
2. छायानुवादः।
3. तथ्यानुवादः।

1. **अक्षरशः अनुवादः**- अक्षरशः अनुवादे भाषायाः तत् तत् शब्दानां विद्यमानस्थाने संस्कृतभाषायां सामान्यतया शब्दानां प्रयोगः क्रियत। उद ''सैन्धवमानय''

2. **छायानुवादः**- अनुवादेऽस्मिन् विद्यमानविषयस्य भाषा शैली आश्रीयते। किन्तु तत्र विद्यमानस्य भाषानुसारं सारांशः अनुद्यते। अतः अस्य छायानुवादस्य प्रसंगः अनुवादः शिक्षणे सर्वत्र प्रतिभति।

3. **तथ्यानुवादः**- प्रकृतानुवादे विद्यमानविषयस्य भावः, भाषा क्रमश्च आश्रीयते। तेन भाषायाः सौन्दर्येण सह भावस्य शैलयाश्च सौन्दर्यनुभूयते बहुषु ग्रन्थेषु अयमनुवादः परिलक्ष्यते।

**अनुवादशिक्षणस्योद्देश्यानि-**

1. संस्कृतमाध्यमेन छात्राणां भावानां विचारणां पररस्परं अविष्करणयोग्याताप्रदानम्
2. भिन्नभाषायाः विद्यमानसाहित्यानां तुलनात्मवज्ञानसम्पादनम्।
3. अन्येषां विचाराणां तत् भाषानुसारं तत् शैल्यनुगुणं संस्कृभाषायां लेखनस्य अभ्यासप्रकल्पनम्।
4. छात्राणां स्वमातृभाषया अन्यभाषया वा स्वाभिमतं स्वशैल्या प्रकटनम्।

**अनुवादशिक्षणस्य पद्धतयः -**

1. पुस्तकपद्धतिः
2. द्विभाषीया पद्धतिः

3. अनुकरणात्मकपद्धतिः।

अनुवादशिक्षणे मनोविज्ञानपद्धत्यनुणं स्तरानुसारं शिक्षणं प्रदीयते। तुलनात्मकाध्ययनस्य प्रवृत्यर्थं प्रयासो विचार्यते। अनुवादे सर्वदा मातृभाषायाः शैलीभावविषयादीनां रक्षा भवेत्। सरलतायाः विषये विशिष्टं लक्ष्यं प्रदेयम्। व्याकरणाध्ययनं विना अनुवादकार्यं सुतरां न सम्भवति। अतः शास्त्रीयव्याकरणेन सह लौकिकव्याकरणस्य ज्ञानमपि अनुवादे अपेक्ष्यते।

# आत्मविश्वास

**सुनयना**

शिक्षाशास्त्री- द्वितीय वर्ष

यह मनुष्य जीवन तब ही सफल एवं सार्थक हो पाता है, जब हम अपने जीवन के प्रत्येक क्षण को आत्मविश्वास से परिपूर्ण करते हुए, निश्चितता, निर्भीकता एवं निर्द्वंद्वता के साथ व्यतीत करते है। यदि डरते हुए, भयभीत होते हुए, आशंकाओं से ग्रस्त होते हुए मनुष्य जीवन व्यतीत किया जाए तो इससे बढ़कर दुर्भाग्य और क्या हो सकता है? वो जीवन, जिसे प्राप्त करने के लिए देवी-देवता भी लालयित रहते हैं, यदि वो मात्र चिंताएँ करने, उलझनें बुनने एवं पश्चात्ताप करने में ही गुजर गया तो इसे एक त्रासदी का ही नाम दिया जा सकता है।

मनुष्य जीवन के रूप में अवसर को सौभाग्य में बदलने के लिए जिस शक्ति की आवश्यकता है, इसे आत्मविश्वास के नाम से पुकारा जाता है। आत्मविश्वास भी मात्र उनके व्यक्तित्व का आभूषण बन पाता है। जिनका मन ईश्वरविश्वास से परिपूर्ण हैं जिनका मन ईश्वरविश्वास से लबरेज है, जो सदा ईश्वर पर भरोसा करते है और जो सदा ईश्वरीय सत्ता की उपस्थिति को अनुभव करते हैं, उन्हें भला किसका डर सता सकता है? ब्लैक कैट कमांडो का एक दस्ता साथ चल रहा हो तो ही अपनी सुरक्षा की आश्वस्ति हो जाती है तो फिर जब स्वयं सर्वशक्तिमान प्रभु साथ हों तो कैसा डर और किसका भय? सत्य यही है कि आत्मविश्वास एवं ईश्वर विश्वास एक ही सिक्के के दो पहलू हैं। अपने ऊपर परिपूर्ण विश्वास करने की सामर्थ्य मात्र उसमें होती है, जो हर आत्मा में उपस्थित परमात्मा पर अनन्य विश्वास करना जानता है।

अपने ऊपर विश्वास करने वाले ही, दूसरों के विश्वासपात्र बनते हैं। जो अपनी सहायता आप करते हैं, वे ही ईश्वरीय सहायता के हकदार बन पाते है। आत्मविश्वास ही मनुष्य की शक्ति का आधार है। अपनी अंतरात्मा में निहित शक्ति का जागरण ही मानवीय उद्देश्य का चरमोत्कर्ष समझा जाना चाहिए।

# आत्ममूल्याङ्कनस्य सम्प्रत्ययः

**मोनिका शिवहरे**
शिक्षाशास्त्री द्वितीय वर्ष

आत्ममूल्यांकलनं मानवीय जीवस्याधारभूत स्तम्भत्वेन वर्तते। यत् उपयुक्त जीवनयापनार्थं, समाजस्योद्देश्यानुरूपं जीवनयापनार्थं वैयक्तिकलक्ष्याणां, उपयुक्त रीत्या पूर्त्यर्थं, समाजस्य पथप्रदर्शनार्थञ्च अनिवार्यं वर्तते। आत्ममूल्यांलने मानवः आत्मनः गुणदोषानां विषये चिन्तनं करोति। आवश्यकतानुरूपं मार्गदर्शनं स्वीकरोति। तथा आदर्श व्यक्तित्वस्य निर्माणार्थं प्रयत्नं करोति।

समान्यतः समाजमिति विधिना आत्ममूल्या- ङ्कलनस्य सम्प्रत्ययः स्पष्टः संजातः। अस्य विध ेः विकासः 'मोरेनो महोदयेन' 1934 तमे वर्षे कृतम्। एतेषां मतमासीत् यत्- मानवैः तटस्थ व्यक्तेः नायकस्य, दलनायकस्य, समूहस्य तिरस्कृतजनानाञ्च मूल्यांकलनात् प्राक् आत्ममूल्यांकलनं कुर्यात् तथा आवश्यकतानुरूपं तावत् पर्यन्तं आत्मपरिवर्तनं आनयेत् यावत् लक्ष्यस्य प्राप्तिः न भवेत्।

आत्ममूल्यांलनस्य-उद्देश्यानि-

1. आत्ममूल्याकंलनस्य मूलोद्देश्यं समाजे आत्मनः स्थितेः परिज्ञानं वर्तते।
2. आत्ममूल्याकंलनस्य व्यक्तिः स्वस्यजीवनयापनार्थम् उपयुक्तविधेः पद्धतेर्वा चयनं कर्तुं शक्नोति।
3. आत्ममूल्याकंलनस्य व्यक्तिः मार्गदर्शनस्य महत्त्वं जानाति तथा मार्गदर्शनं स्वीकर्तुं यतते।
4. आत्ममूल्याकंलनस्य व्यक्तिः समाजस्योद्देश्यानुरूपं पथप्रदर्शनं सहाय्यमाचरति।

आत्ममूल्यांलनस्य प्रक्रिया-

व्यक्तिः स्वस्यजीवनारम्भस्य प्रत्येकं बिन्दू- माश्रित्य विचारं कुर्यात्। स्वस्य सहपाठीभिः सह, कार्यकर्तृभिः सह, पारिवारिकजनैः सह, सामाजिकै यह आत्मनः व्यवहारस्य पर्यालोचना कुर्यात्। तथा आदर्श व्यक्तिनां विषये जानीयात्, तेषां जीवनचरितं विषये पठेत्। तत्पश्चात् आत्मनः स्थितेः विषये परिज्ञानं कुर्यात्। यदि सः दिकभ्रामितः भवति तदा स्वस्याभिभावकैः अध्यपकैः सामाजिकैश्च मार्गदर्शनं प्राप्नुयात् येन तस्यजीवनं सफलं भवेत।

आत्ममूल्यांलनस्य विशेषताः -

1. आत्ममूल्याकलनं प्राकृतिकविचारोपरि आधारितं भवति।
2. छात्राः अग्रे पठनाय ज्ञातुं किं पठनम्? इति।
3. छात्राः स्वस्य अधिगमप्रक्रियाः ज्ञातुं अग्रे पठितुं जिज्ञासयति।
4. आत्ममूल्यांलने शिक्षक-छात्रयोः मध्ये सहभागिता स्यात्।

# बौद्धकाले शिक्षा

**किरण कुमार पटेल**
शिक्षाशास्त्री द्वितीयवर्षम्

बौद्धधर्मश्च प्रवर्त्तक: महात्माबुद्ध:। स: खि.पू. पञ्चमशतके लभ्भ्धवान्। तस्य पिता शुद्धोधन: सूर्यवंशीय राजा आसीत्। स: शाक्यगणराज्यस्य प्रमुख: शासक: आसीत्। लुम्बिनीनामकारण्ये द्वयो: पुष्पितशालिवृक्षयोर्मध्ये पुत्रस्य जन्म अभवत्। बाल्यकाले तस्य नाम सिद्धार्थ: आसीत्। तरुणावस्थायां राजकुमारसिद्धार्थ: संसारविरक्त: सन् विचारमग्नावस्थायां तिष्ठति स्म। तं संसारविरक्तं दृष्ट्वा तस्य पिता अतीवरूपवती राजकुमारी यशोधरानाम्ना कन्यया सह तस्य विवादं कृतवान्। कालादिक्रमेण एक पुत्ररत्नस्य प्राप्तिरपि अभवत्। पुत्र: मम मार्गे बाधक: (राहु:) इति मत्वा तस्य नामकरणमपि राहुल: इति कृतम् सिद्धार्थ:। वृद्ध-रोगी-मृत-सन्यासीमवस्थायां दृष्ट्वा मनसि उद्विघ्नतामनभवत्। तेषु सिद्धार्थ: सन्यासीजीवनस्य चयनमकरोत्।

एकोनत्रिंशत्तमवयसि गृहं परित्यज्य सन्यासव्रतं धारणं कृतवान्। भगवत: बुद्धस्य सन्यासं प्रति गमनं 'महाभिनिष्क्रगमिति' उच्यते। बौद्धकाले बोद्धसंघ:, मढ:, विहारश्च विद्याया: केन्द्रबिन्दव: आसन्। अत्र ये शिष्या: आसन् ते बौद्धभिक्षुनाम्ना अभिहिता: भवन्ति। बुद्ध: मानवजीवनस्य लक्ष्यं निर्वाणप्राप्तिश्च बौद्धशिक्षाया: उद्देश्यानि आसन्। गौतमस्य मतेन दु:खात् मुक्ति: एव मानवजीवनस्य लक्ष्यं, तदर्थ तेन आधङ्गिकमार्गस्य अनुसरणं कृतम्। यथा- सम्यक् दृष्टि:, सम्यक् संकल्प:, सम्यक् वाणी, सम्यक् कर्म:, सम्यक् जीवनं, सम्यक् व्यायाम:, सम्यक् स्मृति, सम्यक् समाधिश्च। बौद्धशिक्षाप्रगाल्यां शिक्षा त्रिषु स्तरेषु विभक्ता - प्राथमिकशिक्षा, उच्चशिक्षा, भिक्षुशिक्षा च। भिक्षुशिक्षायां प्रवेशात् प्राक् छात्राणामुपसम्पादानामक: संस्कार: अभवन्। पवज्जासंस्कारेण बालका: मठे विहारे च प्रथमं प्रवेश कुर्वनि। विनयपिटकमाम्नि पुस्तके अस्य संस्कारस्य रीति: उल्लेखश्च विद्येते। अस्मिन् संस्कारे शिष्य: शरणत्रयस्य उच्चारणं करोति - बुद्धं शरणम् गच्छामि, धर्म शरणं गच्छामि, संघं शरणं गच्छामि। अनन्तरं शिष्य: श्रमण: सन् मठे विहारे च प्रवेशं करोति। शिष्याणां जीवनं अतीव सरलमासीत्। पाठ्यक्रम: द्विधा विभक्त: आसीत्। प्रथम: - धार्मिकपाठ्यक्रम: द्वितीय: लौकिकपाठ्यक्रमश्च। बौद्धकाले शिक्षाया: माध्यम: आसीत् पालिभाषा। शिक्षार्थ बहव: विधय: आसन् यथा- स्वाध्यायविधि:, व्याख्याविधि:, अनुकरणविधि:, प्रश्नोत्तरविधिश्च। बौद्धकाले शिक्षायाम् उत्तमप्रशासनस्य व्यवस्थाऽऽसीत्। येन सुसंगठितविद्यालयविश्वविद्यालयानां स्थापनमभवन्। यथा - नालन्दाविश्वविद्यालय:, बल्लभी, विक्रमशिला, तक्षशिलाप्रभृतय:। बौद्धकाले स्त्रीणां कृतेऽपि शिक्षाव्यवस्था आसीत्। इत्थं बौद्धकाले उन्नतकर: पाठ्यक्रम: आसीत्। येन माध्यमेन जनानां सामाजिकराजनैतिके व्यवस्था उन्नतकरा आसीत्।

अन्ते वक्तुम् शक्यते बौद्धशिक्षाया: मूलं भवति 'मोक्षप्राप्ति:'।

# पाठ्यचर्या

**रेबति बाग**
अनुक्रमांक : 89

पाठ्यचर्या भवति पाठ्यक्रमस्य आधारस्तम्भः। अर्थात् पाठ्यक्रमस्य क्रमबद्धता (Basic of curriculum) आदौ पाठ्यचर्या सन्दर्भे ज्ञातव्यं कारणमिति यत् पाठ्यचर्या पाठ्यक्रमस्य आधारः वर्तते। शिक्षायाः क्षेत्रे वयं यत् किमपि कुर्मः तत् सर्वं व्यापकः रूपेणे पाठ्यचर्या भवति। पाठ्यचर्यायां बहवः अंशा सम्मिलितः सन्ति। यथा–

- भौगलिक अंशाः
- समाजशास्त्र अंशाः
- नागरिक अंशाः
- भाषाशास्त्रीयांशाः इत्यादयः।

पाठ्यचर्या एकं व्यापकं विस्तृतं चिन्तनं वर्तते। व्यापकचिन्तनमिति उच्चमनसि मस्तके वा चिन्तनम् यत्र साम्यभाव वर्तते तत्र भवति व्यापकचिन्तनम् इति।

यदा सामान्यरूपेण एकवर्षात्मक काले केवलं केचन पाठान् अङ्गीकृते पाठनं भवति। पाठ्यचर्या अस्माकं पदं भवति शिक्षा। शिक्षा व्यापकं भवति। प्राथमिक स्तरे I-V शिक्षायां के के अंशाः भवेयुः, माध्यमिक स्तरे, उच्चमाध्यमिकस्तरे तथा च उच्चस्तरे के के अंशाः भवेयुः तत् सर्वं शिक्षातः अंशाः स्वीकृता। तत् भवति पाठ्यचर्या।

अध्ययनक्षेत्रे विषयवस्तु आवश्यम्। किं किं पाठनीयं के के अंशाः पाठनीयाः। यथा– रणनीतिविज्ञाने के के अंशाः सम्मिलति– इत्यादि नागरिकाणां कृते बहुना धारणाम् उल्लेखनीयम्। पुनः यदि विषयः कालिदासः भवति तर्हि कालिदासस्य रचनादयः, तत्रत्थः विशेषताः अपि अन्तर्भवन्ति।

ये विषयाः वर्तन्ते पाठ्यचर्यायां तेषां विषयाः सर्वेषां उपादेयता विषये संकल्पनायाः आवश्यकता अस्ति। विषयवस्तोः यत् तात्पर्यमस्ति तत् प्रकाशीकरणं भवति संकल्पना। कालिदासेन विरचित रघुवंश महाकाव्ये जनानां कर्त्तव्य विषये वर्णितमस्ति। तत्र संकल्पना भवति राजानां विषये ज्ञानप्रदानम्।

पाठ्यचर्या तदा निर्मियते, तस्मिन् काले सामाजिक पर्यावरणं कीदृशः वर्तते। जनानां चिन्तनं कीदृशं इति ज्ञात्वा विषये ज्ञानप्रदानम्।

पाठ्यचर्यायाः रचनायाः काले कवि, लेखकः किं चिन्तयति रचना कीदृशी भवेत्? रचना लोकमङ्गलाय भवेत्, छात्राणां हितायै भवेत्। अधुना उद्देश्य पूतित्यर्थं जीविकोपार्जनं भवति। रचनाशक्तिः नास्ति; तस्य उपयोगिता अपि नास्ति। एतेषां विषये ज्ञानप्रदानम्।

विविध कवीनां विद्वांसानां, कथाकाराणां, चिन्तकानां, दार्शनिकानां मतानाम् अनुप्रयोगः पाठ्यचर्यायां भवेत्। पाठ्यचर्या प्रभावशाली भवेत्। एतानि मतानि उपस्याप्यन्ते तदा छात्राः लाभान्विताः भवेयुः। यदि विद्या केवलं उदरपोषणार्थं वर्तते तर्हि भिक्षायां को दोषः?

पाठ्यचर्यायाः गतिः - पाठ्यचर्यायां पाठकेषु गतिः वर्तते। ते पाठ्यचर्यां स्वीकृत्य तेषाम् अंशान् स्वीकृत्य पठन्ति। अतः पाठ्यचर्यायां छात्रेषु अपि अवधानः स्यात्।

पाठ्यचर्या एका निर्देशिका भवति। अनया विविध लघुयोजना सन्दर्भे ज्ञानं प्राप्यन्ते। कस्मिन् वर्षे किं करणीयम् तस्मिन् विषये ज्ञान-करणम् निर्देशनम्। एतेषां सर्वेषां सारभूताः अंशभूताः अंशाः भवति पाठ्यचर्या। पाठ्यचर्या अध्ययनस्य विस्तृत क्षेत्रे वर्तते, यत् कक्षायां आवेक्षते तत् क्षेत्रं स्वीकरणीयम्।

पाठ्यचर्या एका योजना वर्तते। यदा विद्यालये औपचारिक शिक्षा पठिष्यामः तदा ज्ञायते पाठ्यचर्या एका योजना वर्तते इति। एकवर्षात्मककाले किं करणीयं तत् सर्वं पाठ्यचर्या योजना रूपेण स्वीक्रियते। योजना सुस्पष्टा भवेत्, तद तदा करणीयम्। किं करणीयम्, कथं करणीयम् इति योजनायाः आधारः वर्तते। निर्णयात्मकक्षमता सर्वाणि अपि कार्याणि योजनया सम्बन्धाः भवेत्। तथा च विद्यालयीय पाठ्यक्रमे यथा - प्रातः कालादारभ्य [प्रार्थना, सुभाषितानि, क्रीडाङ्गणे क्रीडा, पाठ्यविषयः, गोष्ठीः संगोष्ठी, विविधक्रियाः सन्ति] विरामो पर्यन्तं एतेषां क्रियाणां योजना भवेत्। पाठ्यसहगामिन्यः याः क्रियाः वर्तते तासां सर्वेषां क्रियाणां भूलभूतरूपा वर्तते पाठ्यचर्या।

प्रयोजनमनुदिश्य न मन्दोऽपि प्रवर्तते" अर्थात् उद्देश्यं विना किमपि कार्यं कर्त्तुं नैव शक्यते। पाठ्यचर्यायां उद्देश्यं स्थापनीयम्। पाठ्यचर्यायाः प्रकृति वर्तते छात्राणां रुच्यनुगुणम् अध्यापकः पाठनीयम्। यथा छात्राणां अधिगमः भवति तथा पाठनीयम्।

उद्देश्यं, विषयवस्तु, मूल्यांकनं त्रिषु तत्वेषु परस्परं समन्वय विश्लेषणम् च। पाठस्य उद्देश्यं किम् अस्ति? विषयवस्तु किम् अस्ति? मूल्याङ्कनम् अधिगमः भवति न वा एतत् विषये ज्ञानकरणम्।

परिभाषा -

Wikipedia -

शिक्षायां पाठ्यचर्या एकस्यां शैक्षिकप्रतिक्रियाणां विद्यार्थीनाम् अनुभवानां समग्रता वर्तते।

Dewangan -

पाठ्यचर्यायां ते समस्ताः अनुभवाः सम्मिलिताः भवन्ति यान् बालकः एव स्वविद्यालय दर्शने प्राप्नोति।

3. विकलांग व्यक्तियों का आर्थिक पुनर्वास।

(क) सरकारी प्रतिष्ठानों में रोजगार।

(ख) निजी क्षेत्रों में मजदूरी रोजगार।

(ग) स्वरोजगार।

4. विकलांग महिलाओं के लिए विशेष सुविधा।

5. विकलांग बच्चे।

6. बाधा मुक्त वातावरण।

7. सामाजिक सुरक्षा । आदि मुहैया कराना।

# मानसिक विकास में शिक्षकों एवं माता-पिता की भूमिका

## (Role of Teachers and patents in mental Development)

**कृष्णकान्त मिश्र**

शिक्षाशास्त्री द्वितीय वर्ष

बालकों एवं किशोरों के मानसिक विकास में माता–पिता तथा शिक्षकों की भूमिका प्रधान होती है। इन दोनों के प्रयास से लड़के एवं लड़कियों में उचित मानसिक विकास हो जाता है। माता–पिता द्वारा अनौपचारिक शिक्षा घर पर दिये जाने से तथा शिक्षकों द्वारा विद्यालय में औपचारिक शिक्षा दिये जाने से बालकों के मानसिक विकास में अधिक तीव्रता आती है।

शिक्षा मनोवैज्ञानिकों ने निम्नांकित कुछ ऐसे कारकों का उल्लेख किया है जिससे यह पता चलता है कि बालकों के मानसिक विकास में माता–पिता तथा शिक्षक महत्त्वपूर्ण भूमिका अदा कर सकते हैं –

1. माता–पिता को घर में बालकों के सामने ऐसी समस्यात्मक परिस्थिति उपस्थित करनी चाहिए जो उनके उम्र के अनुकूल हो तथा जिससे उनमें सूझ तथा समझ की शक्ति का विकास हो। ऐसा करने से उनका मानसिक विकास तीव्र गति से आगे बढ़ता है।

2. माता–पिता को चाहिए कि वे दुलार–प्यार से बालकों द्वारा पूछे गये प्रश्नों के जबाव दें। इसमें उनमें आत्मसंतोष होता है तथा साथ ही साथ उनके मानसिक विकास का स्तर ऊँचा होता है।

3. माता–पिता को बालकों की उपलब्धियों की अधिक से अधिक प्रशंसा करनी चाहिए इससे उनमें आत्म–सम्मान तथा आत्म–विश्वास बढ़ता है जो मानसिक विकास के लिए एक अच्छा अनुकूल वातावरण तैयार करता है।

4. माता–पिता को बालकों की बौद्धिक क्षमता के अनुकूल ही कार्यों की उम्मीद करनी चाहिए। कुछ माता–पिता ऐसा नहीं करते और वे बालकों की बौद्धिक क्षमता से अधिक उच्च स्तर के कार्य की उम्मीद करते हैं जिसे बालक पूरा नहीं कर पाते। इससे वे क्रोधित हो जाते हैं और बालकों को डाँटना –फटकारना प्रारम्भ कर देते हैं। इससे बालकों में कुण्ठा उत्पन्न होती है जिससे उनके मानसिक विकास पर बुरा असर पड़ता है।

5. शिक्षकों को चाहिए कि वर्ग में बालकों को उनकी बौद्धिक क्षमता के स्तर के अनुकूल

कार्य दें तथा अपने अध्यापन का स्तर भी उसी के अनुकूल रखें। ऐसा करनेसे बालकों में असंतुष्टि नहीं होगी और उनके विकास के लिए एक अच्छी पृष्ठभूमि तैयार होगी।

6. शिक्षकों को वर्ग में शिक्षार्थियों के बीच उचित प्रतिस्पर्धा का भाव भी उत्पन्न करना चाहिए। '**सारासन**' (1987) के अध्ययन के अनुसार प्रतिस्पर्धा का भाव शिक्षार्थियों के बीच में होने से मानसिक सतर्कता की वृद्धि होतीहै और इससे उनका उपयुक्त मानसिक विकास होता है। उपर्युक्त तथ्यों से यह पता चलता है कि माता-पिता तथा शिक्षकों की भूमिका बालकों के मानसिक विकास में अधिक है। ये लोग अपनी भूमिका उपर्युक्त परिप्रेक्ष्य में निभाकर बालकों में मानसिक विकास के स्तर को ऊँचा कर सकते हैं।

# योगशिक्षा

**अरुण कुमारः**
शिक्षाचार्य द्वितीय वर्षः

शिक्षा - ( EDUCATON )

जीवनकार्यार्थम् आवश्यकतानां ज्ञाननैतिकमूल्यानां विकासेन सम्बद्धसमस्तक्रियाकलापाः शिक्षया बोध्यन्ते। शिक्षायाः उद्देश्यं पूर्वसूचनायुक्तं सुसज्जितनागरिकाणां विकासः, न केवलं व्यक्तेः विकासः अपितु प्रतिव्यक्तिसम्बद्धानां केषाञ्चन व्यवसायसम्बद्धावश्यकतानां समानप्रकृतिगुणानाञ्च विकासः। कयाचित् शिक्षया एतादृशापि गुणाः विकसिताः भवन्ति, येषामावश्यकता प्रत्येकस्मिन् जीवने वर्तते, अपि च तैरेव गुणैः सः समायोजितसामञ्जस्य युक्तजीवनं यापयति। शिक्षाइतिशब्दः 'शिक्षिविद्योपादाने' इत्यस्माद्धातोः 'गुरोश्चहलः' इत्यनेनसूत्रेण 'अ' प्रत्यये प्रातिपदिकत्वेनच शिक्षा इति शब्दःनिष्पद्यते। यस्यार्थो भवति शिक्षणम् अध्ययनं वा। शिक्षा शब्दः आँग्लभाषायां (Education) इति नाम्ना अभिधीयते। 'एजुकेशन्' (Education) इति पदं लैटिन् भाषायाः 'अन्तः' इत्यर्थकस्य 'श्व' पदस्य, 'बहिरानयनम्' इत्यर्थकस्य 'ड्यूको' (Duco) इति च पदाभ्यां निष्पन्नं वर्तते। एवम्प्रकारेण एजुकेशन् (Education) इति पदस्यार्थो भवति- 'आभ्यन्तराद्बहिरानयनम्'। एजुकेशन् (Education) इति शब्दः लैटिन् भाषायाः Educatum, Educare तथा Educere पदत्रयाधारेण उत्पन्नः इति शिक्षाशास्त्रिणः अभिप्रयन्ति ।

Educatum (एजुकेटम्) एतस्यार्थो भवति "To train", "act of teaching or training"प्रशिक्षणम् , शिक्षणकार्यम् , शिक्षणं वेति ।

Educare(एजुकेयर) इत्यस्यार्थोभवति "To educate", "To bring up", "To raise" अग्रेसरणम्, बहिरानयनम् , विकासकरणं वेति ।

Educere (एजुसयर) एतस्य पदस्याशयो भवति "To lead out" विकासोत्पादनम् ।

शिक्षा एका तादृशी प्रक्रियाऽस्ति, यया बालकस्य जन्मजातशक्तीनां विकासः कर्तुं शक्यते। सम्प्रति शिक्षा शब्दस्य प्रयोगः अनेकार्थेषु भवति, तेषु केषाञ्चनप्रमुखार्थानामुल्लेखोऽत्र क्रियते -

शिक्षा एका विकासस्य प्रक्रिया ।

शिक्षा अध्यापकप्रशिक्षणरूपा ।
शिक्षा एका पाठ्यवस्तुरूपा ।
शिक्षा एकः विनियोगः ।
शिक्षा एकं सामाजिकपरिवर्तनमेवञ्च नियन्त्रणस्य यन्त्रमस्ति ।
शिक्षा सामाजिकीकरणस्य सकारात्मकप्रक्रियाऽस्ति ।
शिक्षा एका निष्पन्दिनी ।
प्राच्यानां मते शिक्षायाः परिभाषाः
विवेकानन्दमहोदयानुसारम्–
अन्तर्निहितशक्तीनां बहिरानयनमेव शिक्षा ।
महात्मागान्धिमहोदयानुसारम्–
शिक्षया मे तात्पर्यं बालकमनुष्ययोः शरीरात्मनोः मस्तिष्कस्य च सर्वोत्कृष्टः सर्वपक्षीयः विकास एव शिक्षा इति ।

**पाश्चात्यानां मते शिक्षायाः परिभाषाः**

जॉन् डीवी महोदयानुसारम् –
'शिक्षायाः अर्थः अनुभवानां निर्माणं तेषांपुनर्निर्माणञ्च भवति।'

एवम्प्रकारेण शिक्षा मानवस्य जन्मतः मृत्युपर्यन्तं, मानवान्तर्गत–विभिन्नप्रतिभानां, गुणानां, विवेकाविवेकविचाराणां जनयित्री वर्तते। येन मानवः स्वीकीयान्तर्गतप्रतिभानामभिव्यक्तिः शाब्दिकाशाब्दिकाभिनयादिभिः करोति। तत्र शाब्दिकाभिव्यक्तिः श्रेष्ठतरा वर्तते। शाब्दिकाभिव्यक्त्यै भाषायाः आवश्यकता नितरां भवति, विना भाषा ज्ञानेन मानवः स्वीयान् विचारान् जनानां सम्मुखे उपस्थापयितुं नैव समर्थः।

अतः मानवेभ्यः भाषायाः ज्ञानम् अत्यन्तमावश्यकं वरीवर्ति। यतोहि औपचारिकी शिक्षा भवत्वथवा अनौपचारिकी निरौपचारिकी च सर्वाः शिक्षाः भाषायाः आश्रयमेव वाञ्छन्ति, उत आश्रयधीनाः भवन्ति।अतः भाषायाः इदं माहात्म्यमवलोक्याग्रे भाषायाः विशदं वर्णनं शोधकर्ता विधीयते ।

**योगः -( YOGA )**

योगदर्शनं दर्शनेषु अन्यतमम्। अस्य योगशास्त्रस्य रचयिता महर्षिः पतञ्जलिः। अयं पतञ्जलिः जीवः ईश्वरश्चेति तत्वद्वयं स्वीकरोति। अतः एव अस्य दर्शनस्य 'सेश्वरसांख्यदर्शनम्' इति नामान्तरम्। अस्यैव शास्त्रस्यापरं नाम 'सांख्यप्रवचनम्' इति । एतद्दर्शनं पतञ्जलिना प्रणीतत्वात् 'पातञ्जलदर्शनम्' इत्यपि व्यवहारयोग्यं भवति। यद्यपि पतञ्जलेः पूर्वाचार्याः हिरण्यगर्भयाज्ञवल्क्यादयः अनेके आचार्याः योगशास्त्रस्य प्रवक्तारः आसन्, अथापि जनसाधारणानां कृते पतञ्जलिरेव तं योगशास्त्रं सूत्ररुपेण ग्रन्थीकृत्य सम्यक् सरलरीत्या व्याजहार इति हेतोः अस्य योगदर्शनस्य 'पातञ्जलदर्शनम्' इति नाम सयुक्तिकं तिष्ठति। अस्मिन् योगशास्त्रे चत्वारः पादाः सन्ति । तेषां नामानि क्रमाद् भविष्यन्ति –समाधिपादः, साधनपादः विभूतिपादः, कैवल्यपादश्चेति ।प्रथमे पादे भगवान् पतञ्जलिः– 'अथ योगानुशासनम्', इति शास्त्रारम्भस्य प्रतिज्ञां करोति । अनन्तरं योगस्य परिभाषा अस्ति –

'योगश्चित्तवृत्तिनिरोध:' इति। चित्तवृत्तय:-प्रमाणविपर्ययविकल्पादय:। एतेषां निर्वर्तनं योगशब्दार्थ:। समाधिशब्दस्यार्थ:- सम्यक् आधानम् इति, अर्थात् चित्तस्य स्वात्मस्वरुपे अवस्थापनमिति। योगवासिष्ठे सामाधिलक्षणमेवमभिहितम्–

**'इमंगुणसमाहारमनात्मत्वेनपश्यत:'।**
**'अन्त:सीतलतायस्यसमाधिरितिकथ्यते'॥**

इति। द्वितीये साधनपादे -' तप: स्वाध्यायेश्वरप्रणिधानानि क्रियायोग:' (यो0 सू0-1) इत्यादि सूत्रद्वारा चञ्चलचित्तपुरुषाणां तप: स्वाध्यायादि क्रियायोग: एवं यमनियमादिबहिरङ्गसाधनभूतानां तत्त्वानामुल्लेख: वर्णित:। अत्र तप: इति शब्देन चान्द्रायणादिक्लेशकारकस्य तपस: अर्थावबोधो न भवति, यत: चान्द्रयणादय: शरीरे क्लेशजनकत्वात् तेन चित्तस्य ऐकाग्र्यं न तिष्ठति। अत्र तप: शब्दार्थ: इत्यंभूत: भवति-हितकारकं स्वल्पं सात्विकभोजनं तथा शीतोष्णसुखदु:खादीनां सहनं एवमिन्द्रियाणां निरोधात्मक यद्भवति तत्तप: इत्युच्यते। योगशास्त्रे तप: प्रसन्नकरणात्मकं वर्तते न तु पीडात्मकम्। स्वाध्यायस्यार्थ:-मोक्षशास्त्राध्ययनं या नियमपूर्वकं प्रणवादिजपानुष्ठानमिति। ईश्वर-प्रणिधानं नाम परमात्मन: अनुचिन्तनम् अथवा परमात्मनि सर्वकर्मणां समर्पणम् इति भवति। सर्वेषु क्रियायोगेषु ईश्वरप्रणिधानं नाम क्रियायोग: उत्तम: इति स्वीक्रियते। 'यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्' इति ईस्वरप्रणिधानयुक्त: पुरुष: सर्वकर्माणि ईश्वारा-र्पितसेवाबुध्या करोति इत्यादय: विषया: प्रतिपादिता:। तृतीये विभूतिपादे -जन्मान्तज्ञानं, भूतभविष्यदर्थकं ज्ञानं, अन्तर्हितम् इत्यादि अनेकप्रकारा: सिद्धय: उपन्यस्ता:। चतुर्थे कैवल्यपादे - 'जन्मौषधिमन्त्रतप: समाधिजा: सिद्धय:' इति सूत्रेण पञ्चानां सिद्धीनां वर्णनं करोति । देवतानां सिद्धि: जन्मना एव जायते। एवं पक्षिणामाकाशे उड्डयनं पशूनां जलतरणमित्यादि जन्मत: एव प्रसिद्ध:। औषधेभ्य: सिद्धि: प्राप्यते। आयुर्वेद, रसेश्वरदर्शनादिषु सिद्धिरियं वर्णिता। मन्त्रेण एवं तपोबलेन सिद्धीनां प्राप्तिवर्णनं तन्त्रादिशास्त्रेषु मिलिष्यति। समाधे: सिद्धि: शास्त्रस्यास्य गौणविषयभूता भविष्यति। यमनियमादि अष्टाङ्गोपासनेन यदा योगवृक्ष: फलति तदा पूर्णभावनया समाधिरुपफलपरिपकानन्तरं प्रकृति-पुरुषयो: भेदात्मक: साक्षात्कार: सिध्यति। तदानीं असंग: पुरुष: स्वस्वरुपावस्थानेन तिष्ठतीति कृत्वा आत्यन्तिकदु:खविनाशरुप: मोक्ष: सिध्यति। अस्मिन् योगशास्त्रे षड्विंशतितत्त्वानि भवन्ति। यथा सांख्याभ्युपगतानि पञ्चविंशतितत्त्वानि, एतेषामतिरिक्तत्वेन एक: ईश्वर: अस्तीति ईश्वरतत्त्वमपि पतञ्जलिरियं स्वीकरोति इत्यत: अस्य नाम सेश्वरवादी सांख्य: इति। ईश्वरस्य लक्षणमेव प्रतिपादयति पतञ्जलि: क्लेशकर्मविपाकाशयैरपरामृष्ट: पुरुषविशेष ईश्वर: (यो0 सू0 1-24) इति।

वैदिकी जीवनपद्धति: धर्मार्थकाममोक्षरुपिणी पुरुषार्थचतुष्टये आश्रिता वर्तते । अन्तिम: पुरुषार्थ: एव जीवनस्य अन्तिमम् उद्देश्यम् अस्ति। तदर्थमेव दर्शनशास्त्राणां प्रवृत्तिजार्यते यद्यपि सर्वाणि दर्शनानि स्व-स्वसिद्धान्तानुसारं मोक्षस्य निरुपणमकुर्वन् तथापि योगदर्शनं मोक्षस्य कृते साक्षात्कृतयत्नो विधीयते। मोक्षस्य निरूपणमकुर्वन् तथापि योगदर्शनं मोक्षस्य कृते साक्षात्कृतयत्नो विधीयते। मोक्षस्य कृते एव योगस्य उदय: सञ्जात:। इदं तात्पर्यं 'योग' पदस्य व्युत्पत्त्याऽपि स्पष्टमस्ति। 'युज् समाधौ' धातो: योगशब्दस्य निष्पत्ति: संजाता। आत्मन: परमात्मनि विलय एव योग उच्यते। यदा त्रिविधदु:खानाम् एकान्तिकी आत्यन्तिकी च निवृत्तिर्भवति, तदा आत्मा स्वरुपे

विलीनो भवति। तत्पश्चात् जननमरणादयः पुनर्न जायन्ते।

अस्य आत्मसाक्षात्कारस्य शास्त्रीयं मार्गदर्शकं योगशास्त्रमस्ति। समाधेरवस्थायाः अपरः पर्यायो योगः एवास्ति। चित्तवृत्तिः बाह्मजगतः अपवार्य आन्तरतत्त्वे स्थिरयेत् इत्याकारकोऽयं योगमार्गोऽत्र प्रतिपादितः। योगदर्शनं वैदिकदर्शनमस्ति यतो हि वेदेषु उपनिषत्सु च योगस्य सोपायं वर्णनं प्राप्यते। प्राचांऋषीणां त्रैकालिकज्ञानस्य मूलमिदं योगदर्शनमस्ति, अतोऽस्य प्राचीनता असन्दिग्धा प्रतीयते। यदा वेदानाम् अपौरुषेयत्वं परीक्ष्यते तदा योगः एव तेषां अपौरुषेयत्वस्य साधक इति सिद्धयति। यतो हि ऋषयोऽपि योगेन एव मन्त्राणां साक्षाद्दर्शनं कृतवन्तः। ते मन्त्रप्रणेतारो नासन्। अस्य अलौकिकवेदज्ञानजन्ययोगदर्शनस्य क्रियान्वयनं समाधिं विना नैव सम्भवति, अतः योगोवेदादपि प्राचीनं प्रतीयते। यद्यपि योगोऽपि एकं विशिष्टं ज्ञानमस्ति तथा च वेदाः अपि ज्ञानरुपाः सन्ति। ज्ञानस्य कदापि विनाशो नैव जायते । वेदाः अनादिज्ञानरुपाः वर्तन्ते। तेषामालोके योगमार्गस्य दर्शनम् अभवत् येन पश्चात् अदृष्टज्ञानम् अन्तर्निहितं ज्ञानं वा पुनः प्रकाशितम्। वैदिकदर्शनेषु योगस्य महत्त्वपूर्णं स्थानमस्ति। अवैदिकैः जैनबौद्धादिदर्शनैरपि अस्य महत्त्वं स्वीकृतं, स्वसम्प्रदायेषु च सादरं योगस्य प्रतिष्ठापना विहिता। उदाहरणार्थं जैनदर्शनस्याचार्येण 'उमास्वामिना हेमचन्द्रेण च' योगप्रक्रियाया विषयो विस्तरेण प्रतिपादितः। हठयोगानुगामिनि नाथसम्प्रदायेऽद्यापि योगस्य व्यावहारिक अभ्यासो विधीयते ।

**योगशिक्षा -( YOGA EDUCATION )**

वर्तमानसमये योगशिक्षायाः महत्वं अधिकं दरिदृष्यते। छात्रेषु योगशिक्षायाः महत्वं किमस्ति । यथा शिक्षां विना जीवनं अपूर्णमस्ति तथैव योगं विना सम्यक् स्वास्थ्यस्य कल्पनापि निष्क्रियं भवति, वैज्ञानिकाविष्काराणां अस्मिन् युगे शरीरस्य सुगठितं बलिष्ठञ्च कर्तुं असंख्यानि संसाधनानि उपलब्धानि सन्ति परन्तु किम् एतानि साधनानि सर्वेषां कृते समानरूपेण उपलब्धानि सन्ति न वा यतोहि एषा विलाससामग्री अस्ति। यस्याः आनन्दं किञ्चित् जनाः एव स्वीकुर्वन्ति। परन्तु योगः सर्वेषां कृते समानरूपेण उपलब्धः अस्ति। अस्मिन् किञ्चित् अपि धनस्य व्ययः नास्ति। योगस्यानन्दं स्वास्थ्यलाभञ्च सर्वे व्यक्तिः समानरूपेण उत्थातुं सक्यते अलम्, आवश्यकता अस्ति यत् सम्यक् प्रकारेण योगस्याधिगमनम्।

विलासितायाः सर्वाणि साधनानि भवन्तः अपि, तथापि जनाः स्वस्थजीवनं न जीवितुं शक्यते। यस्य अत्यधिकः बृहत्तमं कारणं अस्मदीया जीवनशैली अस्मदीया मानसिकता च अपि अस्ति। स्वथजीवनस्य स्वीकर्तुं योगस्य सम्पूर्णज्ञानमावश्यकमस्ति । यतोहि अपूर्णज्ञानं कदापि कदापि हितकरं लाभप्रदं च भवति । शारीरिकं, मानसिकं, अथवा आध्यात्मिकसंस्कृतेः रूपे योगासनानां इतिहासः अनन्तगूढः अस्ति । योगाभ्यासः न केवलं वयस्कानां कृते अपितु युवानां शिशूनां च कृते विशेषकरम् अस्ति ।

छात्रेभ्यः योगः अत्यन्तलाभदायकः इति मन्यन्ते अस्मात् छात्राणां मन-मस्तिष्के स्थिरता आगच्छति एवञ्च छात्रान् स्वाध्ययने ध्यानकेन्द्रितकरणे अपि सहायता मिलन्ति ।योगस्य चमत्कारः सम्पूर्णविश्वः स्वीकृतः अस्ति अनेन कारणेन विश्वस्य प्रायः देशेषु योगशिक्षायाः अनिवार्यं कृतमस्ति। योगस्य प्रभावः पश्यन् अद्यःचिकित्सकः एवं वैज्ञानिकः योगाभ्यासस्य परामर्शं ददाति। योगः

ऋषि:-मुनीनां कृते नास्ति अपितु समस्त मानवजातीनां कृते आवश्यक: अस्ति, विशेषकर: छात्रजीवनेभ्य: अत्यन्तमेव आवश्यकमस्ति।

योग: सर्वेभ्य: समानं लाभं ददाति अत: योगस्याभ्यास: सर्वान् कुर्यु: । अस्य लेखनेन वयं भवत: कृते अयं वक्तुं इच्छाम: यत् छात्रेभ्य: योगशिक्षा किमर्थमावश्यकमस्ति ।

1. योग: छात्रेभ्य:महत्वमावश्यकञ्च अस्ति ।
2. दृढता एव एकाग्रताया: वर्धयति योग: ।
3. योगेन मनस: आत्मविश्वासेन पूरयति ।
4. योगेन बुद्धि: तीव्रा तीक्ष्णा च भवति ।
5. योगेन व्यसनात् मुक्ति: मिलति ।

# भारतीयसन्दर्भे अनिवार्यपाठ्यक्रमस्य महत्त्वम्

**वेविना सेनापति**

शिक्षाशास्त्री द्वितीयवर्षम्

पाठ्यचर्या इति शब्द: आङ्गलभाषायां Curriculum इति कथ्यते। Curriculum इति शब्द: लैटिनभाषाया: Currer इति शब्दात् निष्पन्नो वर्तते, यस्यार्थ: भवति धावनक्षेत्रम्, पाठ्यचर्यायां ते समस्तानुभवा: सम्मिलिता: भवन्ति यान् बालक: स्वविद्यालय निर्देशने प्राप्नोति। इयं पाठ्यचर्या अनियोजितामनेकांक्षणी च भवति, विद्यालये जायमानानां संपूर्णक्रियाकलापानां समूह: भवति पाठ्यचर्या।

**भारतीय सन्दर्भे अनिवार्यपाठ्यक्रमस्य महत्त्वम् -**

विषयकेन्द्रितपाठ्यक्रम: बालकेन्द्रित पाठ्यक्रमस्य च प्रक्रियारूपेण च अस्य पाठ्यक्रमस्य विकास: जात:। अमेरिकायां अयं पाठ्यक्रम: अधिक: लोकप्रिय: वर्तते। मनोवैज्ञानिकसिद्धान्तानुगुणं बालकानां रुचि: योग्यताश्च भिन्ना: भवन्ति। अत: सर्वेषां बालकानां कृते समान: पाठ्यक्रम:। सिद्धान्तोऽयं मनोवैज्ञानिक: दृश्यते। अनिवार्य पाठ्यक्रमे केचन विषया: अनिवार्या: भवन्ति। केचन विषयाणां कृते छात्राणां स्वातन्त्रयं भवति। ते स्वेच्छया विषयं स्वीकर्तुं स्वतन्त्रा: भवन्ति।

अस्य पाठ्यक्रमस्य मुख्योद्देश्यमस्ति बालकानां कृते अत्यन्तमुपयोगी विषयाणामेव अध्ययनं स्यात्, तेन छात्राणां रुचि: पाठ्यक्रमे भविष्यति।

**वासिङ्गतन्त: स्वस्य दैनिकवार्तापत्रे प्रकाशितं यत् -**

अनिवार्य पाठ्यक्रमे उद्देश्यं युनां कृते व्यक्तिगत सामाजिक समस्यानां सम्बन्धितं अनुभव प्रदानम्। अस्मिन् पाठ्यक्रमे बालकेभ्य: वास्तविक समस्यानां समाधानाय अनुभवा: दीयन्ते। तेन भावि समस्यानां निराकरणाय सामर्थ्यम् उत्पद्यते। अनेन छात्रा: सामाजिका: सुनागरिकाश्च भवन्ति। प्रो. केशवल महोदयस्य अभिप्राय: भवति यत् अनिवार्य पाठ्यक्रम: बालकानां महत्त्वपूर्ण: वैयक्तिक सामाजिक समस्याभि: सम्बन्धित: भवति।

अनिवार्य पाठ्यक्रमस्योद्देश्यमस्ति यत् जीवनात् शिक्षाग्रहणम् न तु जीवनाय शिक्षाप्रदानम्। महात्मागान्धिमहोदयस्य अभिप्राय: वर्तते यत् -पाठ्यक्रम: सामाजिक शोषणं निवारयेत् जातिगत

भेदभावञ्च नाशयेत्। बालकानां सर्वाङ्गीणविकासाय पाठ्यक्रमे त्रीणि तत्त्वानि स्युः। यथा–

1. बाह्यसृष्टिः
2. सामाजिक वातावरणम्
3. कला शिल्पश्च।

अनिवार्य पाठ्यक्रमस्य विषयाः एतेषां त्रयाणां विषयाणाम् उपरि केन्द्रितः भवति। एतेषां चिन्तनपूर्वकमेव पाठ्यक्रमस्य निर्माणं भवति।

अनेन पाठ्यक्रमेण विद्यालयीय बालकानां सर्वाङ्गीण विकासः जायते।

# पाठ्यचर्यायाः स्वरूपम्

**पुष्पाञ्जली साहु**
शिक्षाशास्त्री द्वितीयवर्षम्

**पाठ्यचर्यायाः अर्थः –**

आङ्गलभाषायाः Curriculum इति शब्दः प्रयुज्यते, वस्तुतः अयं शब्दः लेटिनभाषायाः वर्तते यस्यार्थो: भवति 'धावनक्षेत्रम्' शिक्षायाम् अस्यार्थः छात्राणां कार्यक्षेत्रः अथवा छात्राणां धावनक्षेत्रम्। धावनक्षेत्रम् इत्यत्र क्षेत्रम् इत्युक्ते पाठ्यचर्या, एवञ्च धावनम् इत्युक्ते पाठ्यचर्या आधारित विभिन्नैः कार्यकलापैः प्रज्ञानुभवः विद्यालये जायमानां सम्पूर्णक्रियाकलापानां समूहः भवति पाठ्यचर्या इति।

**पाठ्यचर्यायाः स्वरूपम् –**

1. पाठ्यचर्या एका योजना वर्तते –यदा विद्यालये औपचारिक शिक्षां पठामः तदा ज्ञायते पाठ्यचर्या एका योजना वर्तते, यत् सर्वं पाठ्यचर्या योजनारूपेण स्वीक्रियते योजनायाः स्वरूपं भवेत् यत् किं करणीयम्? कदा करणीयम् ? कथं करणीयम् ? इति सर्वाणि अपि कार्याणि योजनायाः सम्बन्धाः भवेत्।

2. पाठ्यचर्या विविध क्रियाणां योजना वर्तते –विद्यालयीय पाठ्यक्रमे यथा प्रातः कालात् आरभ्य प्रार्थना सुभाषितानि, क्रीडाङ्गने क्रीडा, पाठ्यविषयः, संगोष्ठी च विविधाः क्रियाः सन्ति पाठ्यचर्यायाम् एतेषां योजना भवेत् पाठ्यसहगामिभ्यः याः करियाः वर्तते सर्वेषां क्रियायाणां मूलभूकथा वर्तते पाठ्यचर्या।

3. पाठ्यचर्यायां बहुनि उद्देश्यानि भवन्ति –उद्देश्यं विना किमपि कार्यं कर्तुं नैव शक्यते। सर्वेषां कार्याणां उद्देश्यं भवति एव, शास्त्रेणापि उक्तम् –उद्देश्यं विना न मन्दोऽपि प्रवर्तते। अतः पाठ्यचर्यायाम् उद्देश्यं स्थापनीयम्।

4. अधिगमस्य प्रकृतिः –पाठ्यचर्यायाः प्रकृति वर्तते छात्राणां कक्षानुगुणं अध्यापकः पाठनीयम्, कक्षायाम् अनुशासनः भवेत् अध्यापकस्य व्यवहारः उन्नतः भवेत् यथा छात्राणाम् अधिगमः भवति तथा पाठनीयम्।

5. विविध तत्त्वानां सम्बन्धानां विश्लेषणम् – उद्देश्यं विषयवस्तु, मूल्याङ्कनं त्रिषु तत्त्वेषु परस्परं समन्वयतः विश्लेषणञ्च। पुनश्च अन्यानपि कानिचन स्वरूपाणि वर्तते। यथा –

1. पाठ्यवस्तु

2. प्रकरणम्
3. अध्ययनक्षेत्रम्
4. रुचेः केन्द्रम्
5. समन्विताधिगमः
6. शैक्षिकानुभवः

1. पाठ्यवस्तु –पाठ्यचर्यायाः प्रमुखं स्वरूपं वर्तते पाठ्यवस्तु। यतोऽहि पाठ्यवस्तु पाठ्यचर्यायाः एकमङ्गमस्ति। अतः पाठ्यवस्तुनः उपरि गुरत्वं दातव्यम्। किम् भवेत्, कथं भवेत् ? इति।

2. प्रकरणम् –पाठ्यचर्यायां पाठ्यवस्तु चयनात्परम् आगच्छति प्रकरणम् अर्थात् प्रकरणम् किं भवेत् येन छात्राणां सर्वाङ्गीणविकासः भविष्यति तथा च सः दक्षताशीलः भविष्यति एतेषाम् आधारेण प्रकरणं भवेत्।

3. अध्ययनक्षेत्रम् –केवलं पाठ्यवस्तुः प्रकरणञ्च पर्याप्तं न भवति, यावत् अध्ययनक्षेत्रम् समीचीनं न भवति अतः अध्ययननिमत्तमपि क्षेत्रं वातावरणं वा अनुकूलं स्यात्।

4. रुचेः केन्द्रम् –पाठ्यचर्या रुचिपूर्णा स्यात् अनेन शिक्षणं बालकेन्द्रितः भवति बालकेन्द्रित शिक्षायामेव पाठ्यचर्या मनोवैज्ञानिकयुक्तः भवति येन बालकस्य सर्वाङ्गीणविकासः भवति।

5. समन्विताधिगमः –समन्वितम् इत्युक्ते सामञ्जस्यम् अर्थात् पाठ्यचर्या एवं भवेत् एकया क्रियया सह अन्यक्रियायाः सामञ्जस्यम् भवेत् अनेन बालकस्य रुचिः वर्धिष्यति पाठस्य विकासश्च भवति।

6. शैक्षिकानुभवः –पाठ्यचर्या अनुभवाधारिता भवेत् यतोऽहि सैद्धान्तिक पाठस्यापेक्षया स्वानुभवेन अधिकं ज्ञानं प्राप्यते।

# मूल्यशिक्षा

**सागरिका प्रधान**
शिक्षाशास्त्री द्वितीयवर्षम्

**मूल्यशब्दस्यार्थः** – भारतीयधर्मग्रन्थेषु मूल्यशब्दस्य प्रयोगः मानवीयुणानां शीलशब्दार्थे विहितोऽस्ति। अयं मूल्यशब्दः आङ्गलभाषायाः Value इति पदात् निष्पन्नः जातः, Value इति शब्दः लैटिनभाषायाः Valene इति शब्दात् उत्पन्नोस्ति यस्य अर्थः कस्यचन वस्तुनः मूल्यम्, गुणम्, विशेषताम्, योग्यताम्, उपयोगिताम् एवं महत्त्वं वा सूचयेति। जीवने 'शीलमेव' ( मूल्यम्) सदगुणसाधनमेव वर्तते। यत्र मूल्यम् तत्रैव धर्मः, सत्यम्, तेजं, बलं च स्वमहत्ताम् प्रदर्शयन्ति। मूल्येन वा त्रिलोकेमपि वयं जेतुं शक्यामहे। महाभारतमपि वक्ति –

**शीलेन हि त्रयो लोकाः शक्याः जेतुं न संशयः।**
**न हि किंचिदसाध्यं वै लोके शीलवतां भवेत्।।**

मूल्यानाम् परिभाषा –Jhone J.Kane महोदयानुसारम् –'मानवमूल्यानि आदर्शरूपाणि विश्वसनीयरुपाणि, मोनकरूपाणि च भवन्ति, यानि सामाजिकजनाः स्वजीवने सर्वदैव अङ्गीकुर्वन्ति।

मूल्यानां प्रकाराः –

1. नैतिक मूल्यानि

2. आध्यात्मिक मूल्यानि
3. सामाजिक मूल्यानि
4. शैक्षिक मूल्यानि
5. राष्ट्रिय मूल्यानि

1. नैतिक मूल्यानि –नीतौ भव: नैतिक:। अर्थात् व्यवहारे विचारे चिन्तने वा येषां मूल्यानाम् महत्त्वं वर्तते अमूनि मूल्यानि नैतिकमूल्यानि नाम्नाभिधीयते। महर्षि मनुना अपि उक्तम् –

**अभिवादनशीलस्य नित्यं वृद्धोपसेविन:।**
**चत्वारि तस्य वर्धन्ते आयु: विद्या यशो बलम्।।**

चरित्रविषये अपि सुन्दरम् उक्तम् –

**वृत्तं यत्नेन संरक्षेत् वितमेति च याति च ।**
**अक्षीणो वित्तत: क्षीण: वृततस्तु हतो हत:।।**

2. आध्यात्मिकमूल्यानि –जगत्येस्मिन् नैव जीवा: निवसन्ति तेषां सर्वेषां आध्यात्मिकमहत्त्वं नैव भवति। केवलं मनुष्याणामेव वर्तते। दया, शान्ति, क्षमा, मैत्री, प्रीति सेवा, त्याग:, परोपकार: इत्यादय: अहिंसा परमो धर्म:, परोपकारार्थमिदं शरीरम्, प्रियच नान्ततं ब्रूयाद् एष: धर्म: सनातन:।

3. सामाजिकमूल्यानि –Fransic Bachon -man is social animal. He who lives without society either a beast or God. येन विश्वमेकं नीडं मत्वा कुटुम्बसदृशा: सर्वे जना: विद्यन्ते इति भावना अस्माकं सर्वेषां मनसि अवश्यमेव स्यात्। यथा निगदितम् –

**अयं निज: परोवेति गणना लघुचेतसाम्**
**उदारचरितानां तु वसुधैव कुटुम्बकम्।**
**सर्वे भवन्तु सुखिन: सर्वे सन्तु निरामया:**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुखभाग्भवेत्।।**

4. शैक्षिकमूल्यानि –शैक्षिकमूल्येषु तेषां विषयाणां समावेश: स्यात्, यान विषयान् पठनेन बालकेषु आदर्शभावना:, प्रेमभावना:, सर्वाङ्गीणविकास: च स्यात्। तदर्थम् महापुरुषाणां जीवनादर्शरूपम् विषये योजनीय:।

5. राष्ट्रियमूल्यानि –अस्माकं जीवनस्योद्देश्यम् राष्ट्रम् एव भवति। अत: अस्माभि: सदा राष्टरक्षार्थं प्रयत्न: विधेय:। यतोहि यदि राष्ट्रस्यावन्नति: जायते तर्हि समाजस्य स्वीकयञ्च अपि अवनति जायते। अत: अस्मासु सर्वेषु देशाभिमानम् दशगौरवं च स्वीयप्राणेभ्य: अप्याधिकं स्यात्। भणितम् अप्यस्ति –

**न यत्र देशोघृतकामनास्ते न मातृभूमे: हितचिन्तकं च।**
**न राष्ट्ररक्षा बलिदानभाव: श्मशानतुल्यम् नरजीवनं तत्।।**

# मूल्याकलने प्रतिपुष्टिः
# Feedback in Assessment

**लिप्सा तनया दाश**
शिक्षाशास्त्री द्वितीयवर्षम्

**भूमिका** –मूल्याकलनं नाम मूल्यानां आकलनम्। अत्र मूल्यम् इति पदेन कक्षाकक्षे शिक्षकछात्रयोः मध्ये अधिगमस्य कृतेक्रियमाणायाः क्रिया तस्याः नाम मूल्याकलनम्, मूल्याकलनस्य प्रयोगः छात्राणाम् आन्तरिकमूल्याङ्कनस्य कृते भवति, अध्यापकः पठितपाठः सफलं जातं वा इति परिक्षणार्थं करोति।

आकलनम् एका सम्वादात्मकं रचनात्मकं च प्रक्रिया अस्ति, यया शिक्षकः ज्ञातुं शक्नोति यत् छात्रान् अधिगमं भवन् अस्ति वा। तथा च कालांशः कियत् सफलं जातम् इति मूल्याङ्कनं पाठ्यक्रमस्य शिक्षणावध्याम् एव भवति।

पुष्टिं प्रति प्रतिपुष्टिः, पुष्टिनाम् प्रमाणितकरणम्। कार्यान्तरे शिक्षकः श्रेष्ठजनः वा यः निर्देशः ददाति तस्यैव नाम प्रतिपुष्टिः। सः अध्यापनानन्तरं परिक्षणाय मूल्याकलनं करोति। विषयावगमने यदि कापि समस्या भवति तदा सः प्रतिपुष्टिं दत्वा समस्यां निराकरोति।

मूल्याकलनस्य उद्देश्यानि –

1. निदानात्मकं भवति
2. अधिगमकार्यक्रमे परिष्कारः
3. छात्राध्यापकयोः कृते पृष्ठपोषणप्रदानार्थम्
4. छात्राणाम् अधिगमे का समस्या अस्ति इति ज्ञानार्थम्।

**प्रतिपुष्टेः उद्देश्यम्** –

- मूल्याकनस्य निर्माणम्
- अधिगमे परिष्काराय
- छात्रान् अग्रसरणाय
- अध्ययने रुचिसम्पादनाय
- उत्साह वर्धनाय
- शङ्का निवारणाय
- छात्रविकासाय

**प्रतिपुष्टेः प्रकाराः** –

- सकारात्मकः
- नकारात्मकः
- औपचारिकः

- अनौपचारिक:च अवसरे का अधिकलाभ:।

**प्रतिपुष्टेः स्तरः -**

- प्राथमिक स्तर:
- माध्यमिक स्तर:
- उच्चस्तर: ।

**मूल्याकलने प्रतिपुष्टिः -** प्रतिपुष्टिं विना मूल्याङ्कनस्य निर्माणं न भवितुं शक्नोति। तथा च मूल्याकलनस्य उद्देश्यमपि प्राप्तुं न शक्नुम:। मूल्याकलनानन्तंर यदा अध्यापक: प्रतिपुष्टिमेव न दास्यति तदा अधिगमे परिष्कार: कथं भवितुं शक्नोति। छात्राणां न्यूनताम् अपि अपाकर्तुम् असमर्थ:। यदि छात्रस्य कस्मिन् विषये समस्या अस्ति तर्हि तस्या: समस्याया: विषये प्रतिपुष्टि: आवश्यकी। शिक्षाया: सर्वेषु स्तरेषु प्रतिपुष्टि: आवश्यकी। प्राथमिकस्तरे यथा छात्र: हिन्दीभाषां पठति तदा स: समस्याम् अनुभवति तदा अध्यापक: इतोऽपि प्रतिपुष्टिं दत्वा सहायतां करोति। माध्यमिकस्तरे छात्रा: विभिन्नेषु विषयेषु काठिन्यम् अनुभवति तदा तत्रापि अध्यापक: तेषां विषयाणां काठिन्यनिवारणं कृत्वा तान् छात्रान् अधिगमं प्रतिं नयति परिष्कारयति च। कक्षा-कक्षे मूल्याकनप्रतिपुष्टे: प्रयोग: अत्यावश्यक:।

निष्कर्ष: -शिक्षण प्रशिक्षणकार्यक्रमेषु प्रतिपुष्टि: एकां महत्त्वपूर्ण भूमिकां निर्वहति। प्रतिपुष्ट्या छात्राणां ज्ञानकौशल-व्यवहारस्य विकास: भवति। विद्यालये कक्षाक्रमे वा अस्या प्रयोग: अधिकतया कक्षायाम् अध्ययनाध्यापने एव भवति।

# स्मृतिग्रन्थेषु मूल्यशिक्षा

**कुनि भोइ**

शिक्षाशास्त्री द्वितीयवर्षम्

**अहंकारग्रहान्मुक्तः स्वरूपमुपपञ्चते।**

**चन्द्रवद्विमलः पूर्णसदानन्देः स्वयंप्रभः।।** (अध्यात्मोपनिषद्)

मानवं वास्तविकार्थेषु मानवनिर्माणस्य श्रेय: उदात्तजीवनमूल्यानि भवन्ति येषां साहाय्येन स्वात्मानं सात्त्विकजीवनं यापयति। वस्तुत: कस्यापि राष्ट्रस्य मूल्याङ्कनं तत्रत्या: जनसमाजस्य आचरणनात् मूल्यै: क्रियते। प्रत्येकराष्ट्रस्य एका भवति परम्परागतसंस्कृति:, यस्या: सृजनं तेषां मूल्यानामाधारेण अभिजायते। यासां पालनं तत्रत्या: महापुरुषै: क्रियते। वस्तुत: ते मूल्यै: तेषां चरित्रं गौरवपूर्णव्यक्तित्वं स्वर्णाक्षरै: अङ्कितं जायते।

भारतीयधार्मिकसाहित्ये स्मृतिनां मुख्यं स्थानमस्ति। श्रुते: पश्चात् धार्मिकक्रियासु मान्याऽस्ति एषा एव। धर्मस्य महास्रोत: यत्रत्या: प्रवाहित: जात: तेषु स्मृति: प्रधाना वर्तते। महर्षियाज्ञवलक्येन धर्मस्य पञ्चमूल्यानि स्वीकृतानि। यथा- श्रुति:, स्मृति:, सदाचार:, स्वाभीष्टवस्तु, संकल्पेनोत्पत्रेच्छा च। अनेन कथनेन स्पष्टीक्रियते यत् धर्म-मीमांसाया: कृते वेदानान्तरं स्मृति एव प्रमाणं वर्तते। सामाजिकसन्दर्भेऽपि एतानां बहुमहत्वं प्रतिभाति। भारतीयसमाज: आश्रितोऽस्ति वर्णाश्रमसिद्धान्ते। अत: एतेषां सम्पूर्णज्ञानार्थं धर्मशास्त्रस्य ज्ञानमावश्यकं वर्तते। षोडषसंस्काराणां विधानं स्मृतिसु

निहितमस्ति। भारतीयाणां व्यवहारमवबोधनार्थमपि एतासामनुशीलनमनिवार्य निहितमस्ति।

याज्ञवल्क्यस्मृतेः त्रयः मुख्यविषयाः सन्ति। आचारः व्यवहारः प्रायश्चितश्च। आचाराध्याये महर्षियाज्ञवल्कयेन मानवहृदयं शुद्धिकरणार्थं समाजानुकूलपवित्रनियमानां मण्डनं कृतम्। आचारः परमोधर्मः, आचारः मुख्यः भवति याज्ञवल्क्यस्मृतौ। आचारेण सदसमाजस्य स्थापना उन्नतिः च जायते। आचारशास्त्रं सामाजिकनियमान् परिपाल्य व्यक्तेः समाजस्य चारित्रकबलं च वर्धयति।

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**सम्यक्संकल्पः कामो धर्ममूलमिदं स्मृतम्।।** (या.ज्ञ. 1/7)

श्रुतवेदः, स्मृति, धर्मशास्त्रं, सदाचारः पवित्रविचारः, उदारभाव, परोपकारादर्शः सद्विचारः सदेच्छा च एते एव सर्वे धर्माः।

महर्षियाज्ञवल्क्येन आचाराध्याये चतुर्दशविद्याः धर्मस्य उपादनं संस्कारः (जन्मतः विवाहपर्यन्तम्) उपनयनः तस्य समयः ब्रह्मचारिणः कर्तृतव्याकर्तव्यः, विवाहः तस्य योग्यता सपिण्डसम्बन्धस्य नियमः अन्तर्जातीयनियमः अष्टविवाहः, गृहस्थस्य कर्तव्यम्, आचारस्य दससिद्धान्तः, गृहस्थस्य जीवनपद्धतिः, स्नातकस्य कर्तव्यम्, अनध्यायः, भक्ष्याभक्ष्यनियमः पवित्रीकरणस्य नियमः, दानस्य नियमः, श्राद्धविधिः नियमः, गृहशान्तिः, राजधर्मः, दण्डादीनां च विधानं क्रियते। एतेषां मूल्यानामाचरणेन पवित्रेण उत्तमसमाजस्य निर्माणं भवितुं शक्यते।

**व्यवहारान्नृपः पश्येद्धिद्धिद्धर्ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः।।** (याज्ञ. 2/1)

प्रायश्चित्ताध्याये साताशातेन समाजेन व्यक्तिना वा अशातवशात् स्वात्मानं विरुद्धं कार्यं भवति, तदा एतादृश्यां परिस्थितौ आत्मविरुद्धकार्यं कृतव्यक्तिना विभिन्नविचारैः दुःखमनुभूयेत। भावीकाले एतादृशस्य कार्यस्य पुनारवृत्तिः न भवेत्।

अस्यां सृष्टौ प्रायः मानवः एव एतादृशः प्राणी वर्तते यः सर्वाधिकसुखमिच्छति एषः एव पुण्यकर्मैः सुखोपभोगस्य उपार्जनं मोक्षलाभश्च कर्तुं शक्यते। शेषसमस्तस्योनिसु प्राणिनां कर्माणि नष्टानि जातानि, सुख-दुःख पुण्यकर्माणामुपार्जनं प्रायः नास्ति। एतेषामुपार्जनं मनुष्यजन्मेषु एव मिलति। अस्मात् कारणात् महर्षिभिः मानवजीवनं श्रेष्ठं मन्यते। यथा-

**कदाचिल्लभते जन्म मानुष्यं पुण्यसञ्चयात्।**
**अन्यच्च नरत्वं दुर्लभ लोके..........**

अत्र प्रश्नः समुदेति यत् कीदृशं कार्यं धार्मिकाधार्मिकश्च। एतस्य उत्तरं वेदस्मृतिविहतकार्यं धर्मः तद्विरुद्धकार्यम् अधर्मश्च। सन्दर्भेऽस्मिन् उक्तं यथा-

**श्रुतिस्मृति विहितं कर्म धर्मस्तद्विपरीतमधर्मः।**
तथा- **वेदाऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।** (मनु. 2/6)

मनुस्मृति एतादृशः ग्रन्थः वर्तते यस्मिन् धर्मार्थकाममोक्षस्य च विशदवर्णनं कृतम्। उक्तं यथा-

**तस्मिन्देशे य आचारः पारंपर्यक्रमागतः।**
**वर्णानां सान्तरालानां स सदाचर उच्यते।।** (मनु. 2/18)

सदाचारः कः विषयेऽस्मिन् मनुस्मृतौ उक्तं यथा –

**विरुद्धा च विगीता च दृष्टार्थादिष्टकारणे।**
**स्मृतिर्न श्रुतिमूला स्याद्या चैषा संभवश्रुतिः।।**

अस्यां पृथिव्यामुत्पत्रेभ्यः ब्राह्मणेभ्यः सर्वै मानवाः स्वं स्वं चरित्रं शिक्षेयुयुः यथा–

**एतद्देशप्रसूतस्य सकाशादग्र जन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः ।।** (मनु. 2/20)

वेदः स्मृतिः आचारः प्रसन्नमनश्च एतानि साक्षाद्धर्मस्य लक्ष्यणानि वर्तते यथा–

**वेदस्मृतिः सदाचारः स्वस्य च प्रियात्मनः।**
**एतच्चतुर्विधं प्राहः साक्षाद्धर्मस्य लक्षणम्।।** (मनु. 2/12)
**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।** (मनु. 2/16)

सर्ववेदज्ञाता स्मृति ब्राह्मणत्वागदि त्रयोदशप्रकारस्य शीलानि महात्मनामाचारणानि स्वयं प्रसन्नमनश्च सर्वाणि एतानि मूल्यानि सन्ति धर्मस्य–

**अभिवादनशीलस्य नित्यं वृद्धोपसेवितः।**
**चत्वारि तस्य वर्धन्ते आयुर्विद्या यशोबलम्।।** (मनु. 2/121)

यः सर्वदा वृद्धजनान् प्रणमति तेषां सेवां च करोति तस्य आयुर्विद्या यशोबलं च सर्वदा वर्धयति।

**उपनीयः तु यः शिष्यं वेदमाध्यापयेद् द्विजः।**
**संकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।।** (मनु. 2/140)

यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितं वेदशाखां समिध्यापयति तमाचार्यमुच्यते।

**उपाध्यायन्दशाचार्य आर्याणां शतं पिता।**
**सहस्त्रं तु पितुन्मामा गौरवेणातिश्च्यते।।** (मनु. 2/145)

दशोपाध्यायनपेक्ष्य आचार्यः, आचार्यशतमपेक्ष्य पिताः सहस्त्रं पितृणपेक्ष्य माता गौरवेणातिरिक्ता भवति। इति धर्मशास्त्रिणां मते 'संस्काराः' शब्दस्य परिभाषाः –

1. संस्कारो हि गुणान्तराधानमुच्यते। चरकसंहिता
2. संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयेन वा। शंकरवेदान्तसूत्रम् 1/1/4
3. योग्यतां चादधानाः क्रिया संस्कारा इत्युच्यते। (तन्त्रवार्तिका)
4. आत्मशरीरान्यतरनिष्ठो विहित क्रियाजन्योऽतिशय विशेषः संस्कारः। वीरमित्रोदय संस्कार **प्रकाश भाग –**
5. येन शरीरं मन आत्माचोत्तमा भवन्ति सः संस्कारः इत्युच्यते। ते च निषकादश्मशानान्ता षोडशप्रकाराः। स्वामीदयानन्दः

उपर्युकपरिभाषाभिः स्पष्टीक्रियते यत् संस्कारः तत् धार्मिकानुष्ठानं वर्तते येन मानवः योग्यः भवति सार्थकजीवनं भवति गुणान् वर्धनम् अपगुणान् निवारयति च। यथा– स्वर्णकारः वह्निप्रभावेन कनकं परिष्कार्थं आभूषणं निर्माति तथैव माता पिता गुरु पुरोहितश्च संस्कारैः व्यक्तिं परिशोध्य परिवार–

समाज–देशस्य च भावी सदस्यत्वेन निर्मितः भवति।

एतादृशानि बहूनि मूल्यानि स्मृतौ ग्रन्थौ वर्णितानि सन्ति। अतः एतेषां संस्काराणां पालने अवश्यमेव जीवनं भवति सदाचारशीलः। सन्दर्भेऽस्मिन् शास्त्रे उक्तं यथा–

यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम्।

न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि।। (मनु. 2/227)

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्रदेवताः।

यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः।। (मनु. 3/56)

त्येजेदेकं कुलस्यार्थे कुलं ग्रामस्यार्थे।

ग्रामं जनपदस्यार्थे आत्मार्थे पृथ्वीं त्यजेत्। (अर्थशास्त्रम्)

द्रष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिवौज्जलम्।

सत्यपूतां वदेत् वाक्यं मनः पूतं समाचरेत्।। (कौटिल्यः)

# शाब्दबोधः

**राई किशोरी दास**

शिक्षाशास्त्री द्वितीयवर्षम्

शब्दविषयकः अनुभवः शाब्दबोधः। आप्तवाक्यं शब्दः। यथार्थवक्ताः आप्तः। बोधः अर्थात् अधिगमः। अतः शब्दविषयकः बोधः/अधिगमः 'शाब्दबोधः'।'शक्तिलक्षणान्यतरसम्बधेन पदजन्य पदार्थस्मृतित्वाच्छिन्न कारणतानिरूपित कार्यत्वं शाब्दबोध।'

शाब्द भोद घटकानि तत्त्वानि

(1) कारणम् (2) सहकारिकारणाम् (3) अवान्तरव्यापारः

1. पद5नं कारणम्। अर्थात् शाब्दबोधे कारणम् अपेक्षते।
2. आकांक्षा–योग्यता–सन्निधिः तात्पर्याणां प्रत्येकं ज्ञानं सहकारीकारण।
3. वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितः अवान्तरव्यापारः।

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता।**

**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।**

फलस्य व्यापारस्य च वाचकः धातुः तथा आश्रयस्य (फलाश्रयः कर्म, व्यापाराश्रयः कर्त्ता) वाचकः तिङर्थः भवति। फले व्यापारः प्रधानः भवति। तिङर्थः कर्त्ता। कर्मे व्यापारे विशेषणं भवति।

**वैयाकरणानां मते शाब्दबोधः –**

– धात्वर्थः फलव्यापारौ।

– तिप्सादि तिङप्रत्ययाः भवति आख्यातः। अतः आख्यातार्थः तिङर्थः। कर्ता कर्म च आश्रयः भवति।

– कर्त्ता, कर्म, क्रिया च इत्यस्मात् निष्पन्नः शाब्दबोधे व्यापारः मुख्यः भवति।

यथा –देवदत्तः ओदनं पचति।

शाब्दबोधः –देवदत्ताभिन्नैककर्तृक ओदनकर्मक वर्तमानकालिकः विक्लित्यनुकूलो व्यापारः।

अत्र कर्त्ता, कर्म, क्रिया च निष्पन्नि शाब्दबोधः भवति । अतः शाब्दबोधे व्यापारः मुख्यः भवति।

**नैयायिकानां मते शाब्दबोधः –**

– धात्वर्थः फलव्यापारौ।

– आख्यातार्थः (तिङर्थः) कृति (यत्न) भवति।

– शाब्दबोधे प्रथमान्तार्थः मुख्यविषयकः भवति।

यथा –देवदत्तः ओदनं पचति।

शाब्दबोधे –ओदनकर्मक विक्लित्यनुकूलव्यापारानुकूल कृतिमान् देवदत्तः।

अत्र प्रथमान्तार्थः देवदत्तः प्रधानः भवति, अतः प्रथमान्तमुख्यकः शाब्दबोधः भवति।

अत्र वैयाकरणानां मतवद् धात्वर्थः समानः भवति, परन्तु आख्यातार्थः कृति प्रथमान्तार्थस्य मुख्यतायाः च अनयो मध्ये भेदः भवति।

**मीमांसकानां मते शाब्दबोधः –**

– धात्वर्थः केवलं फलम् ।

– आख्यातार्थः व्यापारः भवति।

– आश्रयः (कर्त्ता, कर्म) लक्षणायाः उपस्थितिः भवति।

यथा –देवदत्तः पचति।

शाब्दबोधः – दैवदत्ताभिन्नैककर्तृक वर्तमानकालिक विक्लित्यनुकूलव्यापारः।

अत्र वैयाकरणानां मतानां सम एव भवति। अत्रापि व्यापारमुख्यकः शाब्दबोधः, परन्तु किञ्चिदेव अनन्तरम्।

– व्यापारः धात्वर्थः न भवति, अपितु आख्यातार्थः।

– आश्रयः आख्यातार्थः न भवति, अपितु लक्षार्थः अर्थात् आक्षेपार्थः भवति।

**वैयाकरणानां मतेऽपि भेदः –**

प्राचीन वैयाकरणानां मते –

1. धात्वर्थः फलव्यापारौ भवति।

2. क्रिया कर्तृवाच्ये भवतु उत कर्मवाच्ये द्वयोः क्षत्रयोः मध्ये शाब्दबोधव्यापारः एव मुख्यविशेषकः भवति।

**नवीन वैयाकरणानां मते –**

1. धातोः फले व्यापारे च पृथक्–पृथक् खण्डशः शक्ति स्वीक्रियते।

2. कर्तृवाच्ये –शाब्दबोधे व्यापारः एव प्रधानम्।

3. कर्मवाच्ये –शाब्दभोधे फलमेव प्रधानम्।

यथा –कर्तृवाच्ये –देवदत्तः ओदनं पचति।

शाब्दबोधे –देवद्ताभिन्नैककर्तृक ओदनकर्मकः वर्तमानकालिक क्लिलित्युनूकलव्यापारः।
कर्मवाच्ये –देवदत्तेन ओदनः पच्यते।
शाब्दबोधे –देवदत्तवृत्तिः वर्तमानकालिक व्यापारजन्य ओदननिष्ठ विक्लितिः।
शैक्षिकनिहितार्थः –

- शाब्दबोधेन वाक्यस्य सम्पूर्णस्वरूपस्य ज्ञानं भवति।
- अनेन वाक्ये निहित कर्ता–क्रिया–कर्म च सर्वेषां ज्ञानं सम्यक् तथा भवति।
- अनेन लेखनकौशले वैशिष्ट्यता आगच्छति।
- शाब्दबोध द्वारा लेखन कौशलस्य तथा व्याकरणेऽपि दक्षता आगच्छति।

# पृथ्वीदिवसः

**जयस्मिता बेहेरा**
शिक्षाशास्त्री द्वितीय वर्षम्

**सत्यं बृहद्दतमृगं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयामि।**
**सा नो भूतस्य भव्यस्य पत्न्यगुरुं लोकं पृथिवी नः कृणोतु।।**

उपक्रमः –संस्कृतभाषायां पृथ्वीशब्दस्य अर्थः भवति –'एका विशाल धरा'। पुराणेषु वर्णितमस्ति यत् –महाराज पृथुः नाम राजा आसीत्। तस्य नामानुसारं अस्याः नाम –पृथ्वी इति भविता, 'पृथ्वी' विविधासु नामसु यथा– धरा, भूमिः, धरित्री, धरणी, रत्नगर्भा, वसुन्धरा, महि आदिषु सुपरिचिता अस्ति। अनायासु भाषासु अपि परिचिता यत् आङ्गलभाषायाम् –पृथ्वी –Earth , लेटिनभाषायां –Terra यां विश्वं अर्थात् 'The World' फ्रांसीसीभाषायां Terra इति कथ्यते।

सौरमण्डलेषु स्थितेषु नवग्रहेषु 'पृथ्वी' एकम् एवं ग्रहः वर्तते, यत्र केवलं जीवनधारणं कर्तुं शक्यते, जीवाः अत्रैव जीवत्वं प्राप्यन्ते। सर्वेषां जीवानाम आश्रयस्थले वर्तते इयं पृथ्वी।

इतिहासः –1970, 11 अप्रैल इत्यस्मिन् दिनाङ्के सर्वप्रथमं पृथ्वीदिवसरूपेण पालितम् आसीत्। अस्य दिवसस्य स्थापना अमेरिका सीनेटर/सांसद जेराल्ड नेल्सन कृतवान्। इमं दिवसं 193 राष्ट्रः स्वस्य सहयोगं प्राददत, तस्मात् दिवसात् अद्यावधिपर्यन्तं प्रतिवर्षं अप्रैल 22 तमे दिनाङ्के पृथ्वीदिवसं पालितम् अस्ति।

उद्देश्यम् –पृथ्वीं सुरक्षाप्रदानार्थम् अयं दिवसः परिपाल्यते। इयं पृथ्वपी विविधासु प्राणीजरात्सु उद्भिदजगत्सु, नदी, समुद्र, ह्रद, सरोवर, पर्वत, वन्यसम्पदेषु परिपूर्णा अस्ति। एतत् सर्वं पर्यावरणम् अस्ति। पर्यावरणस्य आधारः पृथ्वी, तर्हि यदा पर्यावरणं सुरक्षितं भविष्यति, तदा पृथ्वीम् अवश्यं सुरक्षां प्राप्स्यति।

अद्यतनकाले पर्यावरणस्य प्रदूषणं सर्वत्रैव परिलक्ष्यते, अस्य मुख्यकारणं भवति मनुष्यस्य अनादारभावेन तथा उपेक्षापूर्वकं कार्यम्। अतः पृथ्वीदिवसस्य प्रमुखोद्देश्यानि ये सन्ति – पर्यावरणसंरक्षण।

अतः पृथ्वीदिवसस्य पालनस्य उद्देश्यं यत्– असन्तुलितपरिवेशं तथा प्रकृतिं सुरक्षाप्रदानम्। जनमनसि सचेनतभावजागरयित्वा विश्वस्तरे एकत्रीभूत्वा च सकारात्मकचिन्तनं तथा कार्यकरणं

यद्वारा भविष्ये नागरिकानां कृते एक सुरक्षितपर्यावरण निर्माणम्।
Save Earth, Save life
पृथ्वीदिवसस्य महत्त्वम् -पृथ्वीदिवसस्य महत्त्वं सर्वाधिकं वर्तते जीवनजगतः आधारः इयं पृथ्वी अस्माकं जननी अस्ति। जीवानां सर्वासाम् आवश्यकतानां परिपूर्त्तिः पृथ्वीमाता करोति। अस्याः सुरक्षाविषये सर्वे सचेतन भवेयुः। पृथ्वी सुरक्षितं भवेत् चेत् वयं सर्वेऽपि सुरक्षां प्राप्स्यामः। प्राकृतिकसंसाधनानां दुरुपयोगः, वनक्षय, औद्योगिकीकरणम् आदिकारणात् Global warming तथा ओजनपरते यत् ओजनगैस विद्यमानं भवति तस्य ह्रासः, आदि घातकः प्रभावः परिलक्ष्यते। एतेषां नकारात्मकप्रभावात् केन प्रकारेण इमं पृथ्वीं सुरक्षितं प्रदास्यते तस्य उपरि चिन्तनम् तथा सचेतन भूत्वा पदक्षेपं नीयेत्।

अतः कारणात् विश्वस्तरे सर्वे राष्ट्राः मिलित्वा अस्योपरि विचारं कृतवान् एवं प्रतिवर्षं 22 अप्रैल इत्यस्मिन् दिनाङ्के पृथ्वीदिवसं पालितम् अस्ति।

पृथ्वीदिवसस्य विषयः -International mother Earth Day.

विषयः 2019 - Theme 2019 - Perfect our Species.
अस्माकं प्रजातीनां सुरक्षा

विषयः 2018 -Theme 2018 - End Plastic Pollution
प्लास्टिकप्रदूषणस्य अन्तः

विषयः -2017 -
Theme 2017 - Environmental and climate Literacy.
पर्यावरणम् एवं जलवायु-साक्षरता

World Earth Day अस्योपरि दार्शनिकानां विचारः -

(1) According to Jackie Spien -Every day is Earth day and I vote we Start investing in a secure climate future night now.
प्रत्येकं दिवसं पृथ्वीदिवसं भवेत्, प्रतिदिनं अस्मान् सुरक्षितजलवायुनिमित्तं भविष्यकालं सुरक्षाप्रदानार्थं ये निवेश करणीयम्। एतदर्थम् अहं सर्वदा Vote प्रदानार्थं सन्नद्धा अस्मि।

(2) According to Rabindranath Tagore -There are Earths endless effort to speak to the listening heaven.
रविन्द्रनाथ टैगोरमहोदयानुसारम्- पृथ्वी वृक्षेषु सज्जीकरणं कृत्वा स्वर्गः इव निर्माणार्थं प्रयासः करणीयम्। वृक्षेण सह वार्तालापः तथा श्रवणं एते सर्वाः अनुभवाः हि स्वर्गानुभूतिः प्रददाति।

उपसंहारः -अन्तिमे एवं विचारं मनसि आयाति यत् -पृथ्वी यदि न स्थीयते तर्हि वयम् अपि न स्थास्यामः। सर्वेषां जीवानां जीवनम् अस्ति इयं पृथ्वी। आधाररूपेण पृथ्वी अस्मान् धारयति, सुरक्षा प्रददाति च तर्हि अस्माकं अपि प्रमुखदायित्वं वर्तते तां सुरक्षाप्रदानम्, कारणं सा सुरक्षितं भविष्यति चेत् वयम् अवश्यं सुरक्षां प्राप्स्यामः। अत पृथ्वीं सुरक्षाप्रदानार्थं प्रतिवर्षं 22 अप्रैल इत्यस्मिन् दिनाङ्के Earth Day /पृथ्वीदिवसः पालयति। केवलम् एकं दिवसस्य कृते न वयं सर्वदा अर्थात्

प्रतिदिनं प्रतिक्षणं यदि एतस्या: सुरक्षार्थं चिन्तनं कुर्म: तर्हि अद्यतन काले पर्यावरणीय समस्या न भविष्यति तथा वयमपि सुखेन स्वस्थभूत्वा जीवनं निर्वाहं करिष्याम:। भविष्यनागरिकानां कृते अपि कोऽपि समस्या उपस्थितं न भविष्यति। अत: कारणात् सर्वे: अर्थात् प्रत्येक व्यक्ति त: प्रारम्भं कृत्वा विश्वस्तरपर्यन्तम् एतस्मिन् विषये चिन्तनीयम् कार्यं करणीयम् च।

माता भूमि: पुत्रोऽहं पृथिव्या:।

Earth is my mother, I am her child.

# अहिंसा परमो धर्मः

**स्नेहलता**

शिक्षाशास्त्री द्वितीयवर्षम्

संसारे यदि मनुष्य: सुखं वाञ्छति तदा तेन सर्वभावेन अहिंसा पालनीया। अहिंसायाम् आश्रित्य एव स: स्वयं सुखं प्राप्नोति तथा सर्वेभ्य: सुखं ददाति च। हिंसाया: अर्थ: न केवलं हननं किन्तु परपीडनं परदु:खप्रदानमपि हिंसा एव। हिंसा त्रिविधा वर्तते। मनसा, वाचा, कर्मणा च कृतं हिंसनं हिंसा भवति। परेषाम् अहितचिन्तमपि हिंसा वर्तते। अत: एतासां हिंसानां त्याग: अहिंसा इति उच्यते।

यदि अहिंसाया: पालनं सर्वे मानवा: कुर्यु: तदा सम्पूर्ण विश्वं शान्ति भवेत्। सम्प्रति कलियुगे अनेके जना: मांसाहारं कुर्वन्ति। प्राणीनां हत्वां कृत्वा ते मांसभक्षणं कुर्वन्ति एतत् महत्पापम्। जना: गवादीनां पशुनाम् अपि हननं कुर्वन्ति। धेनव: तु देवसदृशा: सन्ति। तेषां हननं कादपि उचितं नास्ति। पशव: अहिंसाया वशीभूता: भवन्ति। अहिंसामार्गेण रिपव: अपि मित्राणि भवन्ति।

राष्ट्रपिता महात्मा गान्धी महोदय: अहिंसादूत: आसीत् अहिंसामार्गमनुसरन् स: जनेभ्य: अपि अहिंसाया: उपदेश: प्रायच्छत्। स: अहिंसामाश्रित्य एव आङ्गलशासकान् अस्माकं देशात् नि:सारितवान्।

हिंसया किमपि साधयितुं न शक्यते हिंसा कस्यचिदपि रोगस्य निदानं नास्ति। हिंसया हिंसा प्रवर्धते। जनेषु शत्रुभावना विकसिता भगवान् बुद्ध: भगवान् महावीर: एतौ अहिंसा प्रवर्तकौ आस्ताम् भगवता महावीरेण सर्वेभ्य: अहिंसा संदेश: दत्त:। राजा अशोक: अपि युद्धस्य पश्चात् पश्चात्रापदग्ध: अहिंसा मार्ग: अनुसरितवान्।

सम्प्रति वैज्ञानिके युगे शस्त्राणां आविष्कार: भूत: किन्तु तेषाम् आविष्कारेण हिंसा एव प्रवर्धते। विनाशकै: शस्त्रै: निर्दोषप्राणिनामपि हिंसा भवति। अमेरिका इराकदेशयो: मध्ये महायुद्धं जातम्। तत्र अनेके निर्दोष: जना: हता: युद्धेन किमपि न साध्यते। अहिंसया एव विश्वशान्ति: भवति। अत: सर्वे अहिंसामार्ग: एव अनुसरणीय:। अहिंसापरायण: मानव: सर्वत्र सुखं लभते। यत्र अहिंसा भवति, तत्र सत्य, त्याग, तपस्या, प्रेम, पवित्रतादय: सद्भावना: वसन्ति। अत: 'अहिंसा परमो धर्म:' इति सर्वस्वीकृत:। सत्यमुच्यते यत् –

न पापं हिंसात: परम्।
न धर्म: अहिंसात् परम्।

# त्रिभाषासूत्रं संस्कृतं च
# (शिक्षाक्रमे संस्कृतस्य स्थानम्)

**रस्मिता परिड़ा**
शिक्षाशास्त्री द्वितीयवर्षम्

त्रिभाषासूत्रम् - भारतीयसर्वकारस्यादेशमनुसृत्य कैश्चिद्विपश्चिद्भिः त्रिभाषासूत्रं समर्थितम्। भारतसर्वकारेणापि समर्थितमनुमोदितं च तत् त्रिभाषासूत्रं भारतवर्षस्य सर्वेषु प्रान्तेषु प्रवर्तितम्। त्रिभाषासूत्रस्य (Three Language Formula) किन्निमित्तं, कोऽत्र हेतुः किमपि प्रयोजनञ्च। भारतवर्षे शिक्षाक्रमे भाषाणां पौर्वापर्यम्, उच्चावचत्वं, न्यूनाधिकत्वञ्चाश्रित्य विविधाः विषादः प्रादुर्भूवन्। तद्विवादशान्तये, समरूपताऽऽकलनाय च त्रिभाषासूत्रस्य जानिरभूत्। त्रिभाषासूत्रप्रवर्तकानामभिमतमेतद् यत् शिक्षाक्रमे भाषाणां तथा समन्वयः सङ्कलनञ्च स्याद् यथा राष्ट्रहितसम्पादनेन सममेव अध्येतृणां वैज्ञानिकी, भौतिकी चोन्नतिः समजायेत्। एतद् विमृश्य राष्ट्रभाषारूपेण आर्यभाषाया हिन्दीभषाया वा प्रथम स्थानं निर्दिश्यते। एवं हिन्दीभाषा सर्वोत्कृष्टत्वमाश्रयते। अन्ताराष्ट्रियज्ञानोपादनार्थं वैदेशिक्याः कस्याश्चन भाषाया अनिवार्यरूपेणाध्ययनमन्वभूयत्। तत्राङ्गलभाषाया अन्ताराष्ट्रियख्यातिमुद्दिश्य पराधीनताकालिकं च तत्प्रसृतिमाश्रित्य द्वितीयाऽनिवार्य भाषारूपेणाङ्गलभाषा समर्थिता। भारते विविधाः प्रादेशिका भाषाः, यासां साहित्यमपि प्रचुरं, प्रशस्तं, लोकोपयोगी, ज्ञानविज्ञानवर्धकञ्च। सर्वेषां भारतीयानां प्रादेशिकभाषाज्ञानमपि नितरामनिवार्यम् अनुदिनं तत्प्रयोगोपत्तेः। एवं प्रान्तीया भाषाः तृतीयं स्थानमलभन्त। अत्र राष्ट्रभाषा-अन्ताराष्ट्रियभाषा-प्रान्तीयभाषाणां समाहारः समन्वयश्च अभीष्यते।

त्रिभाषासूत्रे संस्कृतम् -

त्रिभाषासूत्रं सूक्ष्मेक्षिकया परीक्ष्यते विविच्यते चेत् संस्कृतभाषा भर्तृविरहिता नारीव, पुत्रादिपरित्यक्ता मातेव, निर्वसना अवधूता, अवहेलितेव संदृश्यते। न भारतीयानामध्येतृणां तादृशं श्रमाभिमुखत्वं विविधभाषाज्ञानाभिरुचित्वं च, येन भाषातत्रयाध्ययननम्।

अनन्तरं तृतीयभाषाध्ययनं सम्भाव्येत्। यद्यपि विदेशेषु सन्ति तादृशाः प्रदेशाः जर्मनी-प्रान्स-स्वीटरजैण्डप्रभृतयः यत्र भाषात्रयं भाषाचतुष्ट्यं वा सामान्यजनैरपि अधीयते, शिक्ष्यते, व्यवह्रियते च। परं न भारते वर्षे तादृशी भाषा -जिज्ञासा, अभिरुचिश्च। अतः कृतेऽपि प्रयत्ने भारते चतुर्थभाषाध्ययनं सर्वथोपेक्ष्यते। येषां प्रदेशानां न प्रान्तीय भाषा हिन्दी-भाषा, ते स्वप्रान्तीयभाषाध्ययने प्रवर्तन्ते। अन्तराष्ट्रियभाषारूपेण स्यपि जर्मन-फ्रेन्च-रूसी-भाषाणां संग्रहे आङ्गलभाषैव सर्वकारस्याभिप्रेता, समर्थिता, प्रचारिता च। राष्ट्रभाषारूपेण हिन्दीभाषाध्ययनं तेषां कृते अनिवार्यम्। एवम् अहिन्दीभाषासु प्रान्तेषु संस्कृतस्य शिक्षाक्रमे स्थापनमध्यापनं च दुष्करमिव प्रतीयते। हिन्दीभाषिषु प्रदेशेषु राष्ट्रभाषा हिन्दी द्वितीयभाषारूपेण पाठ्यते। तृतीयभाषारूपेण दाक्षिणात्यभाषा, संस्कृतभाषा वा वैकल्पिकरूपेण स्वीक्रियते, यत्र कुत्रापि दाक्षिणात्यभाषाध्ययने दुराग्रहो निधीयते तत्र गीर्वाणवाण्याः कृते प्रवेशो

निषिद्ध एवावगन्तव्यः। कियन्तः सन्ति तादृशाः संस्कृतानुरागिणो ये धर्मभावनाय कर्तव्यबुद्धया तत्त्वार्थज्ञानाधिगमया वा संस्कृतभाषाध्ययनं प्रवृत्ताः। एवं सुकरमेतदुक्तं यत् त्रिभाषासूत्रं संस्कृतभाषाध्ययने प्रत्यवायरूपमेव, न तु साधकम्, त्रिभाषासूत्रेण आङ्गलभाषा प्राचरे महत्साहाय्यमदायि इति निर्विवादम्। राष्ट्रभाषायाः कृते प्रान्तीयभाषाणां च कृते मार्गाः प्रशस्यते।

शिक्षाक्रमे संस्कृतस्य स्थानम्–

साम्प्रतिकः शिक्षाक्रमे भारतसर्वकारादेशानुसारं प्रवर्त्यते। यद्यपि त्रिभाषासूत्रानुसारं शिक्षाक्रमे प्रतिप्रदेशमायोज्यते प्रचार्यते च। सन्ति केचन् प्रदेशाः यत्र संस्कृतस्य गौरवमनुरुध्य तत्संरक्षणं बुद्धया च हिन्दीभाषापाठ्यक्रमे एव न्यूनाधिकरूपेण संस्कृतस्य समावेशो विधीयते। एवं क्षतविक्षताया अपि देववाण्याः वाङमात्रोपचारः शुश्रूषणं च सम्पाद्यते। एवमेवोच्चकक्षास्वपि संस्कृतस्य यत्र तत्र समन्वय आधीयते। परं सर्वमेतत् संस्कृतभाषा प्रचारदृष्ट्या न पर्याप्तम्, न च श्रेयोवहम्। हिन्दीभाषिसु प्रान्तेषु तृतीयभाषारूपेण संस्कृतस्य शिक्षाक्रमे स्थानमनिवार्यत्वेन सम्भव्यते, आशास्यते च। अहिन्दीभाषिसु प्रदेशेषु तथाविधौ विधिर्विधेयः यथा अनिवार्यरूपेण संस्कृताध्ययनं सम्भाव्येत्। तदर्थं हिन्दीभाषापाठ्यक्रमे प्रान्तीयभाषापाठ्यक्रमे वा न्यूनाधिकरूपेण संस्कृतस्य समाहारो विधेयः।

संस्कृत हि परमो निधिर्भारतस्य। कथमप्युपेक्षिता संस्कृतभाषा राष्ट्रस्य विनाशयैव भविता। यदा संस्कृतस्य गुणगौरवमुग्धाः पश्चात्यअपि देशाः संस्कृताध्ययने प्रवर्तन्ते, विश्वविद्यालयादिषु संस्कृताध्ययनाध्यापनादेर्व्यवस्थामातिष्ठन्ते, तदा किं नैतद् दुःखावहं, खेदजनकंच यद् भारते संस्कृतभाषा अपेक्ष्यते। प्राचीनसंस्कृतिसंरक्षणार्थम, भारतवैभवज्ञानार्थम्, अध्यात्मतत्त्वावबोधाय, विविधशास्त्रावगाहिज्ञानोपादानाय च, वीणापाणिवाङ्मधुरं संस्कृतवाङ्मयं सर्वथा शिक्षाक्रमे प्रवेश्यम् आधेयं च।

# चतुर्थ भावफलाध्याय

**सरिता प्रज्ञा बेहेरा**

शिक्षाशास्त्री द्वितीयवर्ष

चतुर्थ स्थान में सुखेश या लग्नेश हो तो वह स्थान शुभग्रहों से युक्त या दृष्ट हो तो पूर्णरूप से गेह सौख्य होता है। सुखेश अपने ग्रह स्वनवांश, अथवा अपने उच्चगत हो तो जातक को घर, जमीन, वाहन, माता तथा गीत वाद्यादि का सुख प्राप्त होता है। केन्द्र या त्रिकोण में सुखेश एवं राज्येश की सहावस्थिति हो तो जातक राजयोग्य प्रासाद में निवास करता है। शुभग्रह चतुर्थेष शुभग्रहों से युक्त या दृष्ट हों और बुध लग्नगत हों तो जातक बन्धु पूज्य होता है।

चतुर्थ भाव शुभग्रहयुक्त हो, चतुर्थेश अपने उच्च में रहे, और मातृकारक ग्रह सबल हो तो जातक की माता दीर्घायुष्य वाली होती है। सुखेश तथा शुक्र केन्द्रस्थ हों बुध अपने उच्च में रहे, तो वाहन–सुख कहना चाहिए। चतुर्थ स्थान में शनि तथा सूर्य रहें चन्द्रमा भाग्यभाव गत होता है, मंगल एकादश स्थान गत हो तो जातक को बैल, भैंस आदि पशुओं का लाभ प्राप्त होता है। सुख स्थान चर राशि का हो, सुखेश मंगल के साथ स्थान चर राशि का हो, सुखेश मंगल के साथ छठे या वाहरवें स्थान में हो तो जातक मूक होता है। लग्नेष शुभग्रह हो, सुखेश नीच राशिगत पड़ जाय, चतुर्थ भाव कारक 12 वें में हो, सुखेश लाभस्थान में रहे तो बारहवें वर्ष में वाहन–सुख कहना

चाहिए। रवि युक्त वाहन स्थान हो चतुर्थेष अपने उच्च में शुक्र-सुंयुक्त हो तो बत्तीसवें वर्ष यान की प्राप्ति होती है। सुखेश अपने उच्चाष मे कर्मेष से संयुक्त हो तो 42 वें वर्ष में वाहन-सुख होवे। लाभेश चतुर्थ स्थान में और चतुर्थेश लाभस्थान में हो तो 12 वें वर्ष में मनुष्य यान प्राप्त करे। इस प्रकार भाव की सम्पुष्टि रहने पर उस भाव से विचारणीय सभी पदार्थों की प्राप्ति और भाव भी दुर्बलता में उनका अभाव कहना चाहिए।

।। चतुर्थभावफलाध्याय: समाप्तम्।।

# कथा कहानी

**प्रिया चौहान**

शिक्षाशास्त्री द्वितीयवर्ष

कथा केवल उपदेशात्मक ही नहीं वरन् क्रियात्मक भावात्मक तथा संज्ञानात्मक भी होती है। कथा जीवन का वह आधार, तत्व, ज्ञान या भाव है जो सरलता से जीवन को परिवर्तित करने में सहायक है। जब विद्यार्थी बाल्यकाल में मातामही, पितामही, माता- पिता इत्यादि सम्बन्धियों के माध्यम से कथा का श्रवण करता है तो वह विद्यार्थी व बालक जीवन के मार्गों को समझने में समर्थ होता है, वह ग्रहण करता है कि उसे किस मार्ग का चयन करना है तथा वह ग्रहण करता है कि कौन सा मार्ग या दिशा सम्यक् है और परिवार तथा कुटुम्बियों के आदर्श संस्कार उस बालक-विद्यार्थी को प्रेरित-प्रोत्साहित करते रहते हैं। भारत एक महान् आध्यात्मिक राष्ट्र है जहाँ विभिन्न संस्कृतियों का समावेश निहित है। जिनमें हिन्दु संस्कृति से तो कोई भी अपरिचित नहीं है हिन्दू पौराणिक ग्रन्थों में जो कथाएँ है उन कथाओं का अध्ययन आज विश्व के विद्वान्-विदुषी करते हैं। उनका उद्देश्य कथाओं के माध्ययम से हमारी संस्कृति हिन्दु को जानना समझना ओर पालन करना होता है कथाएँ मानवनिर्माण, राष्ट्रनिर्माण, समाजनिर्माण, विचारनिर्माण इत्यादि में अत्यन्त सहायक हैं।

# शिक्षा का महत्व

**क्षिरलता किसान**

शिक्षाशास्त्री द्वितीयवर्ष

शिक्षा सबसे महत्वपूर्ण तंत्र है जो व्यक्ति के जीवन के साथ ही देश के विकास में भी महत्वपूर्ण भूमिका निभाती है। आजकल यह किसी भी समाज की नई पीढ़ी के उज्वल भविष्य के लिए एक महत्वपूर्ण कारक बन गयी है। शिक्षा के महत्व को ध्यान में रखने हुए, सरकार के द्वारा 5 साल से 15 साल तक की आयु वाले सभी बच्चों के लिए शिक्षा को अनिवार्य कर दिया गया है शिक्षा सभी के जीवन को सकारात्मक तरीके से प्रभावित करती है। और हमें जीवन को सभी छोटी और बड़ी समस्याओं का सामना करना सिखाती है, समाज में सभी के लिए शिक्षा की ओर इतने बड़े स्वर पर जागरूक करने के बाद भी, देश के विभिन्न क्षेत्रों में शिक्षा का प्रतिशत अभी भी समान है।

पिछड़े क्षेत्रों में रहने वाले लोगों के लिए अच्छी शिक्षा के उचित लाभ प्राप्त नहीं हो रहे हैं

क्योंकि उनके पास धन और अन्य साधनों की कमी है यद्यपि, इन क्षेत्रों में इस समस्या को सुलझाने के लिए सरकार द्वारा कुछ नई और प्रभावी राजनीतियों की योजना बनाकर लागू किया गया है, शिक्षा ने मानसिक स्थिति को सुधारा है और लोगों के सोचने के तरीके को बदला है, यह आगे बढ़ने और सफलता और अनुभव प्राप्त करने के लिए आत्मविश्वास लाती है और सोच को कार्य रूप में बदलती है।

बिना शिक्षा के जीवन लक्ष्य रहित और कठिन हो जाता है इसलिए हमें शिक्षा के महत्व और दैनिक जीवन में इसकी आवश्यकता को समझना चाहिए। हमें पिछड़े क्षेत्रों में लोगों को शिक्षा के महत्व को बताकर उन्हें प्रोत्साहन देना चाहिए। विकलांग और गरीब व्यक्तियों को भी अमीर और सामान्य व्यक्तियों की तरह वैश्विक विकास प्राप्त करने के लिए शिक्षा की समान आवश्यकता है। और उन्हें समान अधिकार भी प्राप्त है, हमे सभी को उच्च स्तर पर शिक्षित होने के लिए अपने सबसे अच्छे प्रयासों को करने के साथ ही सभी को शिक्षा तक पहुँच को संभव बनाना चाहिए जिसमें सभी गरीब और विकलांग व्यक्ति वैश्विक आधार पर भाग ले सकें।

कुछ लोग ज्ञान और कौशल की कमी के कारण पूरी तरह से अशिक्षित रहकर बहुत दर्दनाक जीवन जीते है। कुछ लोग शिक्षित होते हैं लेकिन पिछड़े इलाकों में उचित शिक्षा प्रणाली के अभाव के कारण अपने दैनिक कार्यों के लिए धन जोड़ने मैं भी पर्याप्त कुशल नहीं होते, इस प्रकार हमें सभी के लिए अच्छी शिक्षा प्रणाली को प्राप्त करने के समान अवसर देने की कोशिष करनी चाहिए चाहे वो गरीब हो या अमीर एक देश नागरिकों के वैयक्तिक विकास और वृद्धि के बिना विकसित नहीं हो सकता इस प्रकार एक देश का व्यापक विकास उस देश में नागरिकों के लिए उपलब्ध प्रचलित शिक्षा प्रणाली पर निर्भर करता है, देश में हर क्षेत्र में नागरिकों के लिए अच्छी और उचित शिक्षा प्रणाली को उपलब्ध कराए जाने के सामान्य लक्ष्य को निर्धारित किया जाना चाहिए और शिक्षा प्राप्ति के रास्ते को सुगम व सुलभ्य बनाए जाने की कोशिष की जाती चाहिए, इस तरह देश अपने चहुँमुखी विकास की और अग्रसर होगा।

# मनोविज्ञान में स्मृति

**नरेन्द्र कुमार**
शिक्षाशास्त्री द्वितीयवर्ष

**स्मृति**- स्मृति एक मानसिक क्रिया है स्मृति का आधार अर्जित अनुभव है। इसका पुनरुत्पादन परिस्थिति के अनुसार होती है। इससे व्यक्ति के द्वारा धारण की गई विषय वस्तु का पुनः स्मरण करने चेतना में लाकर उसका प्रयोग करता है किसी विषय वस्तु के धारण के लिये सर्वप्रथम विषयवस्तु का सीखना आवश्यक है। अधिगम के विना धारण संभव नहीं है। अधिगम के फलस्वरूप प्राणी में कुछ परिवर्तन होता है। स्मृति चिन्ह कहते है ये स्मृति चिन्ह तब तक निष्क्रिय मस्तिक में पड़े रहते है जब तक कोई बाहरी उद्दीपक उन्हें जाग्रत नहीं करता है हमारी स्मृति कैसे काम करती है या फिर किसी भी चीज को कैसे याद रख पाते है? हमारे मस्तिष्क में किस प्रकार

संग्रहीत होती है? हम किसी चीज को क्यों भूल जाते है और कुछ चीजे भुलाए नहीं भूलते। इन मूलभूल प्रश्नों में मानव मन को सदा से ही आंदोलित किया है।

बुडवर्थ–पूर्व में सीखे गये ज्ञान का प्रत्यक्ष उपयोग ही स्मृति है।

स्टाउड– स्मृति एक आदर्श पुनरा वृत्ति है।

मैक्डूगल– स्मृति से तात्पर्य अतीत की घटनाओं को कल्पना। और इन तत्वों को पहचान लेना कि ये अतीत के तत्व है यही स्मृति है।

**स्मृति कि प्रकार**

**स्थाई स्मृति**– सीखी गई बातों को लम्बे समय के उपरान्त बताने की क्षमता ही स्थाई स्मृति है।

**अस्थाई स्मृति** – इसको लघु अवधि स्मृति कहते है। इस प्रकार की स्मृति से तात्पर्य सीखने के थोड़ा समय पश्चात विषय वस्तु को दोबारा दोहारने से है।

**भाषाई स्मृति**– यह स्मृति विचारों सिद्धान्तों नियमों तथ्यों की पुन: प्रस्तुती से सम्बन्धित है

**रटन्त स्मृति**– किसी विषय वस्तु को बिना अच्छी तरह से समझे धारण कर लेना, आवश्यकता पड़ने पर पुन: स्मरण कर लेना रटन्त या यान्त्रिक स्मृति कहलाती है।

**तार्किक स्मृति**– किसी विषय वस्तु को अच्छी तरह समझकर सीखना धारण करना पुन: स्मरण करना तार्किक स्मृति के अन्तर्गत आता है

**निष्क्रिय स्मृति**–पूर्व अनुभवों को अत्यधिक प्रयास अथवा क्रिया के द्वारा पुन: स्मरण करना निष्क्रिय स्मृति कहलाति है।

**सक्रियस्मृति**– पूर्व अनुभवों को किसी प्रयास से पुन: स्मरण करना ही सक्रिय स्मृति है।

**स्मृति के अंग**

**सीखना**– यह स्मृति का पहला अंग है हम किसी बात को याद करना चाहते है उसको हमें सबसे पहले सीखना पड़ेगा।

**गिलफोर्ड**– किसी बात को भली भाँती याद रखने कि लिये अच्छी तरह से सीख लेना आधे से ज्यादा लड़ाई जीत लेना है।

**धारण**– स्मृति का यह दूसरा अंग है इसका अर्थ है सीखी हुई बातों को मस्तिक में संचित रंखना जब हम किसी बात को हम सीखते तो कुछ समय पश्चात वह हमारे अचेतन मन में चली जाती है इस दषा में वह कितने समय तक संचित रह सकती है।

पुन: स्मरण–स्मृति का यह तीसरा अंग है इसका अर्थ है। सीखी हुई बात को चेतना मन में लाना।

**पहचान**– स्मृति का यह चौथा अंग है किसी याद की जाने वाली किसी बात गलती न करना पहचाना कहलाती है।

**अच्छी स्मृति के लक्षण**

1. शीघ्र अधिगम 2. उत्तम धारण शक्ति 3. अनावश्यक बातों की विस्मति 4. शीघ्र पहचान 5. उपयोगिता

**स्मरण करने कि विधियाँ पूर्ण विधि**– इसमें याद जाने वाला पाठ को आरम्भ से अन्त तक पढ़ा जाता है। यह विधि केवल छोटे व सरल पाठों या कविताओं के लिये ही उपयुक्त है

भारतीयदर्शनेन प्रभावितम् अपितु पाश्चात्यवैज्ञानिकप्रगत्या अपि प्रभावितम् आसीत्। एते ईश्वरः, जगत्, ध्यानम्, मस्तिष्कम्, व्यक्तित्वम्, आत्मविश्वासः, लक्ष्यम्, चरित्रम्, मूल्यम्, विचाराः, भावः, प्रेम इत्यादि विषये वहुत्र चर्चा कृतवन्तः, उत्तिष्ठतः जाग्रत स्वीयप्रतिभां च प्रदर्शयत इति सः वदति।

**शिक्षादर्शनम्** – या पद्धतिः विद्यार्थिभ्यः स्वावलम्बनमार्गं न ददाति सा शिक्षापद्धतिः 'शिक्षा' इत्यभिधानम् प्राप्तुं कथं समर्था? स अवोयत् यत् – मानवान्तर्निहितदैवात्मस्वरूपाभिव्यञ्जनमेव शिक्षा" इति। अर्थात् ज्ञानं गुप्तरूपेण अस्माकं मस्तिष्के भवति। मस्तिष्कः एव विश्वपुस्तकालयः भवति। शिक्षा तस्य अनावरणं करोति। अतः वहिः न किमपि आयाति अपितु अन्तस्था एव अभिव्यक्ता भवति। पुस्तकानां पठनेन न ज्ञानोदयः किन्तु आत्मज्ञानेनैव ज्ञानोदयः भवति।

आत्म-शिक्षाविषये विवेकानन्दः वलम् अददत्। बालकस्य आत्मा एव उत्तमशिक्षकः भवति। अतः स्वयं बालकः आत्मावलोकनेन अथवा आत्म-शिक्षया अधिगच्छेत् बालकानां बालिकानां च समाना शिक्षा भवेत्।

**शिक्षा उद्देश्यानि** – स्वामीविवेकानन्दस्य शिक्षोद्देश्यानि अतीव गुरुत्वपूर्णानि आसन्। मनुष्ये मानवप्रेम, समाज-सेवा विश्वचेतनाजागरणं भवेत्। आत्मावलोकनेन मुक्तिः मनुष्यस्य शारीरिक-मानसिक-धार्मिक-नैतिक-चात्रिकिक-सामाजिकविकासः करणीयः मानवस्य अन्तर्निहितायाः पूर्णतायाः अभिव्यक्तिः भवेत्।

स्वामिविवेकानन्दस्य शिक्षादर्शनम् अतीव महत्वपूर्णम् आसीत्।

# शिक्षकत्वम्

**जितेन्द्र गौतमः**

अनुक्रमाङ्क : 26

यः शिक्षयति सः शिक्षकः। शिक्षकः तादशस्यं व्यक्तित्वस्य संज्ञा अस्ति, यस्य तुलना ईश्वरेण सह क्रियते। उक्तञ्च-

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परब्रह्मः तस्मै श्रीगुरवे नमः॥"**

शिक्षकः एव छात्राणां मार्गदर्शको भवति। शिक्षकः छात्रान् मार्गे चलितुं प्रेरयति। आचार्यान् एव छात्राः आचारस्य ग्रहणं कुर्वन्ति। शिक्षकान् एव छात्राः अनुशासने भवन्ति। अतः शिक्षकस्य अनुशासनम् अपि च आचारः एतद्वयम् उत्तमं स्यादिति।

गुणाः – शिक्षकः राष्ट्रनिर्माता भाग्यनिर्माता च भवति। यथा अस्माकं पुरातनाचार्याः कौटिल्यादयः, यैः राष्ट्रस्य भाग्यस्य च निर्माणं कृतं वर्तते। शिक्षके तादृशं नेतृत्वं भवेत् येन छात्राः स्वयमेव तस्य अनुकरणं कुर्युः। प्रसिद्ध-शिक्षकः स एव भवितुमर्हति यस्य सम्प्रेषण-कौशलम् उत्तमं स्यात्। उक्तञ्च कालिदासेन शिलष्टाक्रिया कस्यचिदात्मासंस्था, संक्रान्तिरन्यस्य विशेषयुक्ता, यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव।

सम्प्रेषण-कौशलेन सह शिक्षकस्य अधिगमः अपि आवश्यकः वर्तते। सम्प्रेषण-कौशलमपि च

अधिगमः (ज्ञानम्) यस्य एतद्वयं भवति सः शिक्षकः उत्तमशिक्षकेषु परिगण्यते।

**वर्तमान समाजे शिक्षकस्य भूमिका**

अद्यत्वे शिक्षकाः कर्त्तव्यच्युताः सन्ति। स्वकर्त्तव्यं प्रति जागरूकाः न सन्ति। केचन तु ज्ञानरहितारपि सन् शिक्षकाः सन्ति। यस्य शिक्षकस्य, स्वस्य अधिगमः नास्ति सः कथम् अन्यान् अधिगमयितुं समर्थः? अतः शिक्षकः प्रप्रथमम् अधिगमनं कुर्यात् स्वविषये दक्षतां प्राप्नुयात्। यावत् शिक्षकः दक्षः नास्ति तावत् सः अध्ययनं कारयितुं न शक्नोति। ये च ज्ञानवन्तः दक्षाश्च सन्ति, तेपि वृत्तिं प्राप्य त्यक्तपरिश्रमाः भवन्ति। यावत् वृत्तिं न प्राप्यते तावदेव पठने-पाठने च परिश्रमं कुर्वन्ति; किन्तु वृत्तिप्रारब्धे सति पठनं-पाठनञ्च त्यजन्ति। वर्तमान-समाजे शिक्षकस्य भूमिका एतान् बिन्दून् अधिकृत्य एव वर्तते। शिक्षके नेतृत्वं, सम्प्रेषण-कौशलं, दक्षता च तादृशी भवेत्। येन छात्राणां कल्याणं भवेत्। शिक्षकः मनोवैज्ञानिकः भवेत् येन छात्राणां भावानां ज्ञानं कृत्वा स्थितेः समाधानं कर्तुं सज्जः स्यात्। शिक्षकः एव कर्त्तव्यानां ज्ञानं कारयितुं शक्नोति। समाजस्य आवश्यकता का, समाजे कस्य नियोजनं कुत्र भवेत्? एतेषां विषये शिक्षकः समग्रं चिन्तनं कर्तुं शक्नोति। एवम्भूतेन शिक्षकेण समाजः राष्ट्रश्च द्वावपि उपकृतौ भविष्यतः।

**अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥** ॐ शम्।

# भारतीय शिक्षापद्धतिः

**नेत्रानन्द महापात्र**
शिक्षाशास्त्री प्रथमवर्षम्

इदानीतन शिक्षाप्रणाली परतन्त्रकालीन शिक्षाप्रणालीमनुसरति। अस्याः प्रणाल्याः प्रणेता लर्ड मेकाले वर्त्तते। यः भारतस्य- प्राचीन शिक्षा पद्धतिं विनश्य आंग्ल शिक्षापद्धतिं नियोजितवान्। प्रणाल्यामस्यां केवलं देशस्य विनाशकाः एव प्रजायन्ते। इयं प्रणाली मूल्यहीना वर्त्तते, अत्र बालकानां आत्मिक-शारीरिक मानसीकोन्नतिः न भवति। भारतस्य प्राचीन ज्ञान-विज्ञानस्य विनाशाय आंग्लशासनकाले इयं प्रणालीं लर्ड मेकाले नियोजितवान्।

**प्राचीनकालेशिक्षायाः महत्त्वम्** -

प्राचीनकाले शिक्षायाः स्थानं सर्वोपरी आसीत्। सभ्यतायाः, संस्कृतेः, शिक्षायाः च विकासः सर्वप्रथमे भारतदेशे एव अभवत्। पाश्चात्याः अपि निज ज्ञान-विज्ञान-चरित्र शिक्षणाय भारतमायान्ति स्म। यत् वर्णयता महाराजेन-मनुना मनुना निगदितम्-

**एतद्देश प्रसूतस्य सकाशादग्र जन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**

प्राचीनकाले शिक्षायाः स्थानं ऋषीणामाश्रमाः गुरूकुलाश्चासन्। यत्र सर्वविध शिक्षा प्रदीयते स्म। सर्वेऽपि छात्राः तपस्यापूर्वकं गुरुचरणे सश्रद्धं शिक्षां प्राप्नुवन्ति स्म।

**मध्ययुगे शिक्षाप्रणाली -**

अष्टादश-नवदश शताब्द्याम् यवना: आगत्य अरबी-फारसी शिक्षाया: च - प्रसारम् कुर्वन् यत्र केवलं धनिका: सामान्ताश्च शिक्षाग्रहणाय अर्घ: आसन्। शुद्रेभ्यश्च शिक्षा न दीयते स्म। तदा शिक्षाऽसीत् राज्ञाधीना। तदा 'स्त्रीशुद्रो नाधीयताम्' इति कुरीति: यत्र तत्र सर्वत्र भारतदेशे प्रचलति स्म। इमां कुरीतिं निवारणाय स्वामीदयानन्द, श्रद्धानन्दादय: महापुरुषा: आत्मानूमाहुतं कृतवन्त: सर्वेभ्यश्च पठनार्थं प्रेरितवन्त:।

**नूतन शिक्षाप्रणाली -**

सप्तचत्वारिशंद्रुत्तरनवदशशततमेइगस्तपञ्चदश दिनांके अस्माकं देश: स्वतन्त्रोऽभुत। स्वातन्त्र्य प्राप्त्यनन्तरं येऽपि देशस्य कर्णधारा: अभवन् ते सर्वे संस्कृतिं सभ्यताम् च न जानन्त: मेकाले शिक्षापद्धतिं नियोजितवन्त:। पुन: अनेकै: आयोगै: इदानीं शिक्षापद्धति: प्रचलति। यत्र छात्रा: गणित-विज्ञान-इतिहासादीनंव समेषां विषयाणां शिक्षा तु प्राप्नुवन्ति परं आचार-अध्यात्म-व्यवहार-चरित्रस्य च शून्या: मानवदेहधारिण: पशव: इव नाना भ्रष्टाचारान् कुर्वन्ति।

समेषामपि दुराचाराणां मूलं भवति धर्महीन शिक्षा। मानवस्य निर्माणं सुशिक्षया भवति। यया खलु शिक्षया प्राचीनकाले मानवानां निर्माणं भवति स्म। तदत्र सर्वकारेण सामाजिकैश्च चिन्तनीयं यत् यदि सर्वे पुन: इमाम् पुण्यभूमिं गौरवान्वितं दिदृक्ष्यन्ते चेत् चरित्रवतो मानवानां निर्माणं नूनं विधातव्यम्। अत: शिक्षाप्रणाली निश्चयेन सुधारणीया।

# मधुरं भाषणम्

**प्रभात कुमार नायक**
शिक्षाशास्त्री प्रथमवर्षम्

सकल प्राणिषु मानव: श्रेष्ठ:। तदर्थं भाषामानवस्य कृते दैवी वरदान: भवति। भाषाया: उपरि मानवस्य एव अधिकार: अस्ति। परन्तु पशूनां न भवति। मानवा: पशुभ्य: शारीरिक बलेन दुर्बल: भवन्ति। परन्तु स्वस्यबुद्धि: भाषा बलेन च सर्वेषु शक्तिशाली: भवन्ति। स: पृथिवी, जलम्, अग्नि, आकाश वायोपरि च विजय लाभ: करोति। भाषाया: ज्ञानं अनुभव भण्डारस्य च सुरक्षिता: भवन्ति। भाषया अस्माकं सहयोगभावं सामाजिकभावस्य उन्मेष: भवति। सावधानेन सह भाषाव्यवहार कुर्य्याम। मधुरं वचनेन शत्रु: अपि मित्रवत् भवति।

मधुरवचनं हृद: कपाटं उन्मो चयति। अस्य आकर्षण: शक्ति पृथिव्याम् माध्याकर्षण: शक्ति: चुम्बकीय शक्ते: च अपि बलवान् भवति। कोकिल: कस्मै किञ्चित् न ददाति। काकोऽपि कस्मै किञ्चित न नेष्यति। किन्तु कोकिल: स्वस्यमधुरं वचनेन सर्वेषां हृदयम् द्रभीभूत: करोति। मन आनन्दं करोति।

एकाकथा वयं विभिन्न शैल्या वदेम स्मृति मधुरवचनम् भाषाया: यदि परिवर्त्तनं मधुरात् कटु: भवति, तर्हि कस्मै न रोचते।

कादम्बर्य्याः रचयिता बाणभटस्य पुत्र समुखे स्तित्वा शुष्कवृक्षस्य वर्णनं भिन्नं-भिन्नं शैल्यां कृतवन्तौ। सुतरां ज्येष्ठ पुत्रः उक्तवान्- शुष्ककाष्ठं तिष्ठत्यग्रे"। अर्थात् समुखे शुष्कं काष्ठं अस्ति। तस्य उक्तिं पुनस्च कनिष्ट पुत्रः भिन्न शैल्याम् अवदत्-निरस तरुवर विलसति पुरतः"। अर्थात् समुखे निरसः वृक्षः शोभते। भिन्न शब्द संयोजनाद्वारा अभिव्यक्त उभयोः प्रभावः भिन्नं भिन्नं अभवत्। वाणभट कनिष्ठपुत्रस्य भाषायाः मधुरतां लक्ष्यं कृत्वा कादम्बरी ग्रन्थं चमत्कारीजादुः निहितं भवति। मधुर वचनेन विस्वासः उत्पन्नः भवति। भीतोऽपि न भवति। मधुर वचनेन सह हृदः सह भावनायाः संयोग आवश्यकम् अस्ति।

अतः वक्तुं शक्यते- **परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।**
**वर्जयेत्रादुशं वन्धुं विषकुम्भं पयोमुखम्"॥**

मनकर्मवचने यस्य सामञ्जस्यम् अस्ति। सः मनुष्यः अवश्यं वन्दनीयः भविष्यति। किञ्चित् कार्यं आनन्देन कुर्य्युः उदारता प्रसन्नता च पुर्वकं कुर्य्युः। वचनं कदापि दारिद्रता न कर्त्तव्या। अत्र कथितमस्ति-

**प्रियवाक्य प्रदानेन सर्वे तुष्यन्ति जन्तवः।**
**तस्माद् परिहर्त्तव्यम् वचने का दरिद्रता"॥**

# व्याकरण शिक्षणम्

**विकाश कुमार पाण्डेय**
शिक्षाशास्त्री प्रथमवर्षम्

'व्याकरण' शब्दः 'वि' उपसर्गपूर्वक कृधातोः ल्युट्प्रत्ययेन निष्पन्नः अभवत्, यस्य तात्पर्यः व्याक्रियन्ते व्युत्पाद्यन्ते अनेन इति व्याकरणम् अर्थात् येन द्वारा अर्थस्वरूपमाध्यमेन शब्दानां व्याख्या भवति। शब्दानां व्यवस्थितरूपं अर्थात् शुद्धरूपव्याकरणं विद्यते, शुद्धभाषां अधिगमाय व्याकरणम् आवश्यकमस्ति, व्याकरणं वेदस्य मुखं वर्तते यथा-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
**शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥**

**परिभाषा** - डा. स्वीटमहोदयानुसारेण - ''व्याकरणभाषायाः व्यावहारिकं विश्लेषणं अथवा तस्य शरीरं विज्ञानमस्ति''।

लेनार्डह्यूमफील्डानुसारेण - ''भाषायाः रूपस्य सार्थकम् एवं शुद्धा व्यवस्था एव व्याकरणमस्ति''।

**व्याकरणस्य महत्वम् -**

1. असाधुशब्दान् दूरीकृत्य साधुशब्दानां ज्ञानं क्रियते।
2. व्याकरणं सूत्रात्मकमस्ति।
3. व्याकरणभाषा साधनमस्ति साध्यं नास्ति।
4. व्याकरणं वास्तविकस्वरूपे शब्दानुशासनमेवास्ति।

5. व्याकरणभाषा स्वरूपस्य सार्थकव्यवस्थां करोति।

6. व्याकरणेन नवीनभाषां सरला भवति।

**उद्देश्यानि प्राथमिस्तरे -**

1. संज्ञासर्वनामविशेषणादीन् ज्ञानस्य योग्यता प्रदानं करोति व्याकरणशास्त्रम्।
2. छात्रान् विविधध्वीननां ज्ञानप्रदानम्।
3. शुद्धरूपाणां प्रयोगसम्पादनम्।
4. समानार्थानां विपरीतार्थानां शब्दानां ज्ञानकरणम्।

**उद्देश्यानि माध्यमिकस्तरे -**

1. उच्चारणं भाषिकस्वरूपस्य ज्ञानं क्रियते।
2. व्याकरणेन विद्यार्थिषु रचना तथा सृजनात्मकप्रवृत्तीनां विकासः क्रियते।
3. विभिन्नावयवानां ज्ञानं क्रियते।
4. मानकम् एवं शुद्धभाषायाः लेखनम्।
5. भाषायाः शुद्धाशुद्धानां रूपाणां ज्ञानम्।

**व्याकरणस्य शिक्षणस्य विधयः -**

**निगमनविधिः** - व्याकरणस्य नियमाः सूत्राणि प्रथमतः कण्ठस्थीकरणं तदनन्तरम् उदाहरणमाध्यमेन लक्षणस्य (सूत्रस्य) संघटनं भवति।

समवायविधिः - आवश्यकतानुसारेण पद्यशिक्षणगद्यशिक्षणरचना शिक्षणैः सह व्याकरणस्य नियमैः सह अपि छात्रान् परिचयप्रदानम्।

व्याकरणस्य मुख्योद्देश्यं शुद्धं रूपं प्रत्येकभाषायाः व्याकरणं भिन्नं भवति व्याकरणमाध्यमेन मानसिकविकासः स्वाभाविकरूपेण भवति, व्याकरणं भाषायाः अङ्गरक्षकः किमपि शास्त्रज्ञानाय प्रथमतः व्याकरणस्य ज्ञानम् आवश्यकं भवति, यं छात्रं व्याकरणस्य ज्ञानमस्ति सः शास्त्रं सरलतया ज्ञास्यति, बालकेभ्यः व्याकरणम् शुद्धोच्चारणम् लेखनं पठनमस्ति।

इयं विधिः व्याकरणस्य शिक्षणे अत्यन्तामहत्वपूर्णा विधिरस्ति।

**आगमनविधिः** - निगमनविधिः यादृशी भवति तद् विपरीतविधिः आगमनविधिः, प्रथमतः उदाहरणानि छात्राणां सम्मुखे उपस्थापनं भवति। तदनन्तरं ये प्रचलिताः नियमाः सन्ति तेषां नियमानां अभ्यासः भवति अस्य विधेः प्रयोगः उत्तमः अस्ति, कारणमेतद् भवति छात्राः ध्यानपूर्वकं शृण्वन्ति, एवं सम्यक्त्या अवबुध्यन्ते।

**सूत्रविधिः** - अनेन विधिना व्याकरणस्य नियमाः सूत्ररूपेण कण्ठस्थीकरणं भवति।

अनेन विधिना पूर्वं सूत्राणां कण्ठस्थीकरणम् आवश्यकं भवति तदनन्तरं तेषां लक्षणानं उदाहरणानां ज्ञानं प्रदीयते अयं विधिः अमनोवैज्ञानिकी विधिरस्ति अयं विधिः छात्राणां कृते बहूपयुक्तः नास्ति।

**पाठ्यपुस्तकविधिः** - अस्मिन् विधौ अपि व्याकरणस्य पुस्तके याः परिभाषाः सिद्धान्ताश्च भवन्ति, तेषां कण्ठस्थीकरणं भवति, अयं विधिरपि उपयोगी नास्ति प्रयोगात्मकपक्षस्य दर्शनं न भवति।

**प्रयोगविधिः** - अनेन विधिना व्याकरणपाठनसमये समाजान्तर्गते परिस्थित्यन्तर्गते अनेकानि उदाहरणानि क्षेत्रस्य पार्श्वे भवन्ति अस्य विधेः चत्वारि सोपानानि-

1. उदाहरणम् - प्रस्तुतप्रकरणेन सम्बन्धितानि अनेकानि उदाहरणानि बालकानां प्रत्यक्षं अवलोकनं भवति।
2. तुलना एवं विश्लेषणम् - तेषां उदाहरणानां परस्परं तुलनात्मकम्।
3. नियमीकरणम् - लक्षणा एवं विशेषतायाः आधारे नियमः निष्कर्षप्राप्तिः।
4. परीक्षणं एवञ्च अभ्यासः - निष्कर्ष एवञ्च नियमानां दृष्ट्या प्रयोगकरणम्।

**निष्कर्षः** - व्याकरणं सूत्रात्मकं न स्यात् व्यावहारिकम् अपि अत्यन्तावश्यकं व्याकरणस्य शिक्षा भाषाशिक्षणस्य अनिवार्याङ्गं वर्तते, व्याकरणं भाषायाः व्यवस्थितरूपं व्याकरणमाध्यमेन बालकाः शुद्धानि रूपाणि जानन्ति, व्याकरणं भाषायाः संगठनं करोति।

# महाभारते नैतिकशिक्षायाः स्वरूपम्

**सत्येन्द्र कुमार शर्मा**
शिक्षाशास्त्री प्रथमवर्षम्

रामायणमिव, महाभारतमपि ऐतिहासिक कथामाधारीकृत्य वेदव्यासमुनिना विरचितम्। महाभारतं रामायणमित अस्माकं राष्ट्रियः इतिहासः। संस्कृतजगति सर्वबृहत् महाकाव्यमिदम्। अस्मिन् काव्ये 100000 श्लोकः सन्ति। अस्मिन् ग्रन्थे न केवलं उद्देश्यं कौरवपाण्डवयोः सम्प्रदायस्य वर्णनम् अपि तु भारतीय शिक्षायाः सविस्तरं चित्रणमपि तदीयं प्रमुखं लक्ष्यं विद्यते। प्राचीनकालादेव ग्रन्थोऽयं जीवनस्य समस्यानां समाधाने मनोयोगपूर्वकं संलग्नः वर्तते। यथोक्तं वेदव्यासेन -

**नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं तपः।**
**नास्ति रागसमं दुःखं नास्ति त्याग समं सुखम्॥**

भारतीय गार्हस्थ जीवनपद्धतिः सम्पूर्णस्य विश्वस्य शिक्षिका किल इयं पद्धतिः आनन्ददा सुखदा समृद्धिदा खलु।
महाभारते उक्तं च -

**नास्ति त्यागसमं सौत्यं नास्ति त्यागसमं तपः।**
**नास्ति त्यागसमं वित्तं नास्ति त्यागसमं फलम्॥**

पुराणोक्तस्य सनातनधर्मस्य कश्चन प्रधानः व्याख्यानकारः व्यासः इति उच्यते। हिन्दवः भारतीयसंस्कृतिः च यावत् पर्यन्तं तिष्ठति तावत् पर्यन्तम् एतस्य नाम अमरम् एव जगति एव एषः महान् श्रेष्ठा पथप्रदर्शकः शिक्षकः च इति उच्यते।
अद्यत्वे कृतस्य भारतवर्षस्य वातावरणं द्वषितं सञ्जातं अस्ति सदाचारः तु अन्धतमसि निमगनः सदृश्यते। काले अस्मिन् आचार शिक्षायाः भवति च आवश्यकता। यतोहि आधारं बिना संस्कारं बिना राष्ट्रनिर्माणं सर्वधा भवत्यसम्भवम्।

यथोक्तं तत्र महाभारते –

**तस्मात् सत्यव्रताचारः सत्यव्रतपरायणः।**
**सत्यकामः समो दत्तः सत्येनैवान्तको भवेत्॥**

सर्वत्रास्ति भ्रष्टाचारः दुराचारः तत्र तु सत्यपरायणेन युववर्गेण भाव्यमिति यतोहि सत्ये एव लोकोऽपि प्रतिष्ठितः चास्ति। अद्यत्वे समाजस्य मार्गदुष्टा ब्रह्मणः एव भ्रष्टः विस्मृतमार्गः वा विद्यते। अत एव वर्णेषु प्रधानः एव एतादृशः तर्हि अन्यस्य का कथा। समयेऽस्मिन् महाभारतस्य आदर्शवाक्यं तान् प्रति आवश्यकमस्ति।

यथोक्तं तत्र –

**निवृत्तिः कर्मणः पापात् सततं पुण्यशीलता।**
**सादविधश्च समुदाचारः श्रेय एतदसंशयम्॥**

मनुष्यस्याभूषणं भवति मधुरा वाक्। मधुर वाचा जनः परान्नपि जयति शोभनश्चापि व्यवहारः हरति जन मनांसि। अत एव सदव्यवहारिणा भाव्यमिति कथितं शान्ति पर्वणि–

**मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम्।**
**वाक् चैवमधुरा प्रोक्ता श्रेयएतद् संशयम्॥**

**स्त्रीणां कृते नैतिकता**

भारतीया संस्कृत्यां स्त्री पूजनीया अस्ति। यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः तदवच्चापि निगदितं तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्व देवता। यथा मतिं बिना नैष्फलं जीवनं नारीणां तदवच्चापि भार्याम् विना नृणामपि पतिरेव देवः नार्याः। पाश्चात्यदेशेषु तु गार्हस्थ जीवनं सर्वथा छिन्नं दृश्यते। अस्य मूल–कारणं नारीणां उपेक्षैव। तत्र तु भार्याः अनुदिनं वस्त्रमिव परिवर्तनीयाः सन्तीति। तेषां अन्धानुकरणं कर्तुं चेष्टान्तेऽत्रापि एतादृशानां भ्रमितभारतीयानां कृते महाभारतस्य नैतिकतत्त्वानि प्रचलितव्यानि सन्ति।

**राज्ञां कृते नैतिकगुणः**

अद्यत्वे राज्ञां तु विशेषतः नैतिकपतनं सञ्जातं अस्ति तेषां कीदृशः धर्मः स्यादिति महती चिन्ता। अद्यतनीयां राजनीतिदर्शम् दर्शं सर्वेजनाः सर्वा वा प्रकृतिः सर्वाश्च मानवजातयः चकिताः सन्ति तान नृपान् प्रति महाभारतस्य नैतिकशिक्षां निर्दिशति यत्।

**लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः"**

इति शान्तिपर्वणि वर्तते।

# धर्मेणहीनाः पशुभिः समाना

शकुन्तला वेहेरा
शिक्षाशास्त्री प्रथमवर्षम्

धृञ–धारणपोषणायोः इत्यस्माद् धाातोः औणादिके मन्" प्रत्यये कृते धर्मशब्दो निष्पाद्यते। वेदः कथयति यत् अलौकिकशक्तेः वोधकः इति। ऋग्वेदस्य मतानुसारं धर्मः नियमव्यवस्थायाः द्योतको भवति। अथर्ववेदे धर्म शब्दस्यार्थे भवति पुण्यम्। महाभारतानुसारं धारणादेव धर्मः

इत्यर्थः।

**धारणाद्धर्म इत्याहुः धर्मो धारयते प्रजाः"**

वस्तुतः येन माध्यमेन लोकानां धारणं सम्भवेत्, यश्च लोकानां सुनिर्वाहायं संसारं धारयेत् स एव धर्मशब्दवाच्यः। मनुना धर्मस्य दशलक्षणानि वर्णितानि यथा –

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्"॥**

एतानि दशलक्षणानि वस्तुतः जीवनस्य उन्नायकानि। समाजस्य उत्थापकानि जनमानसहृद्यानि साधनानि विश्वशान्तिस्थापकानि च। धर्ममाध्यमेन मनुष्यः सुखं प्राप्य मोक्षं प्राप्नोति नास्ति सन्देहः, यो धर्मं चरति विपवपि च धर्मं न त्यजति। धर्मस्तं रक्षति। अतः धर्मा न हातव्यः न च हन्तव्यः सततं रक्षितव्यः। अतः भगवता मनुना उक्तं यत्–

**धर्म एव हता हन्ति धर्मो रक्षति रक्षतः।**
**तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत्"।**

**आहारः** – निद्रा–मैथुनादिकं तु मनुष्येषु पशुषु चोभयोरपि समानमेव। मनुष्येषु धर्म एव एक एतादृशः गुणः, येन ते परमोपेक्षया उत्तमाः श्रेष्ठाश्च कथ्यन्ते।
अतएव धर्मशून्याः जनाः पशुतुल्या एव प्रसङ्गेऽस्मिन् उक्तम्–

**आहारनिद्राभयमैथुनं च सामान्यमेतत् पशुभिर्नराणाम्।**
**धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः"॥**

# परोपकारस्य जीवने उपयोगिता

**मंगल राम**
अनुक्रमाङ्क : 96

परिवर्तनशील संसारेऽस्मिन् मानवानां महत्ता परोपकारैव मन्यते। अतः परोपकारस्य अर्थः भवति निः स्वार्थ भावेन परेषां सहाय्यं करणीयम्। स्वकीय शरणे आगतः मित्र, शत्रु, कीट–पतंग, देशी–परदेशी, बालक–वृद्ध सर्वेषां दुःखस्य निवारण निष्काम भावेन करणीयमेव परोपकारः मन्यते। मनुष्यः एकः सामाजिक प्राणी अस्ति। परस्पर सहयोगं तस्य जीवनस्य एकः आवश्यकः महत्वपूर्ण अङ्ग वर्तते। प्राचीन कालात् एव मानवानां प्रवृत्तिः द्वयं कार्यं कुर्वनस्ति। अत्र प्रथमा प्रवृत्ति भवति स्वार्थ साधनानां पूर्तिः द्वितीया परमार्थः। परमार्थ भावनया कृतं कार्यमेव परोपकार भवति गोस्वामी तुलसीदासेन उक्तमस्ति–

**परहित सरिस धर्म नही भाई, पर पीड़ा सम नही अधमाई**
**परहित बसै जिनके मन माई, तिन्ह कहु जग दुर्लभ कहु नाही**

यस्य हृदये परोपकारस्य भावना भवति ते संसारे किमपि कर्तुं शक्यते। तेषां कृते किमपि दुर्लभं नैव भवति। ईश्वर द्वारा निर्मितं सर्वे मानवः सवेषां परस्परं परस्पर प्रेम भावेन भूत्वा विपति काले परस्पर सहाय्यं कुर्वन्ति। स्वकीय भोग विलासैव यदि मनुष्यः संलग्ना भवति तद् पशु प्रवृतिर्रस्ति मानवमात्रैव सर्वं आत्मसमर्पणीय कार्यकरणीय मानवः प्रवृतिः अस्ति

उक्तं च –

**यही पशु प्रवृति है, कि आप ही आप चरे**
**वही मनुष्य है कि जो मनुष्य के लिए मरे**

प्रकृतस्य सर्वस्मिन् क्षेत्रे परोपकाराय दर्शनं भवति सूर्य: सर्वेषाम् प्रकाशयन्ति, चन्द्रमा सर्वेषां शीतलता एवञ्च तापश्च हरति, मेघ: सर्वेषां कृते वर्षा करोति, वायु सवेषां कृते जीवनदातृ अस्ति, पुष्पं सदा सर्वेषां कृते गन्धं वितरति, वृक्षा: कदापि स्व फलं नैव खादति, नद्या: कदापि स्व जलं नैव पिबन्ति एतादृशमेव सत्पुरुष: सदैव परेषां हितार्थं एव शरीरं धारणं कुर्वन्ति –

**पिबन्ति नद्यः स्वयमेव नाम्भः,**
**स्वयं न खादन्ति फलानि वृक्षाः।**
**नादन्ति सस्यं खलु वारिवाहाः,**
**परोपकाराय सतां विभूतयः॥"**

परोपकारी व्यक्तिनामेव जीवनमेव आदर्श: मन्यते स: सदा प्रसन्न: एवञ्च पवित्र: भवति तस्मै कदापि आत्मग्लानि नैव भवति स: सदैव शान्त मनसि भवति परोपकारीणां सम्पूर्ण संसारमेव कुटुम्ब भवति– उदारचरितानां तु वसुधैव कुटुम्बम्" इति महर्षि व्यासेन उक्तमस्ति। परोपकारेण पुण्यम् अस्ति एवं च परेषां पीडा पाप उक्तम् यथा–

**परोपकाराय पुण्याय पापाय पर पीडनम्"**

इतिहास एवञ्च पुराणानाम् अनुसारेण अनेक महान् जना: परोपकाराय स्वकीय शरीरस्य त्याग: कृत: वृतासुरस्य हनन कृते महर्षि दधिचि इन्द्रस्य कृते प्रणायाम माध्यमेन एव स्व शरीर अर्पित कृत: एतादृशमेव महाराज्ञ: शिवि एक: कपोतस्य कृते स्वकीय शरीरस्य मांस: दत: –

**आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवाः**
**परं परोपकारार्थं यो जीवति सः जीवति।"**

भगवत: विष्णु: परोपकार एवञ्च मोक्ष उभयो परिमाण कृत्वा दृष्टवान तदा परोपकारस्यैव भार अधिकं दृष्टम् अत: भगवत: विष्णु परोपकारार्थं दश अवतारं गृहीतम्–

**परोपकृति कैवल्ये लोलयित्वा जनार्दनः।**
**गुर्वीमुपकृतिं मत्वा ह्यवतारानदशाग्रहीत॥"**

परन्तु वर्तमान समये मानवा: स्वकीय भौतिक सुखस्य प्रतिमेव अग्रसरा: भवन्ति। इदं भौतिक सुखानाम् आकर्षणं मानवेषु गुण–दोषानां ज्ञानात् बहु दुरे कृतवान। अधुना मनुष्य स्वकीय स्वार्थपूर्णाथमेव कार्यं कुर्वन्ति। अस्मिन् समये मनुष्य: किञ्चित व्यये कृत्वा अधिकं लाभा: प्राप्तुं वाञ्छन्ति वर्तमान समये मानवा: जीवनस्य प्रत्येकं क्षेत्रं व्यवसाय इव पश्यति। एतदर्थं वदन्ति यत् परोपकार शून्यं मानवस्य जीवनं धिक्कार अस्ति ते: पशव: धन्यमस्ति येषां मरणानन्तरं चर्म उपयोगे आगच्छति यथा–

**परोपकारशून्यस्यधिक मनुष्यस्य जीवितम्।**

जीवन्तु पशवो येषां चर्माप्युप करिष्यति।”

# वेदेशु कृषि विज्ञान

**मल्लिका महान्त**
अनुक्रमांक–89

वैदिक कार्याणां प्रमुखो अवसाय: कृषिरासीत, अनेनैव हेतुना तदानीन्तने समये कृषि कर्म अति उत्तम अवस्थां प्राप्तवान। वेदस्य अथर्ववेदस्य अनेकेषु मन्त्रेषु प्रयुक्त: कृषि शब्दस्य मृदय: संकेत कोऽस्ति प्रचुर मात्राया शस्य प्राप्तयै वैदिकेएयै मृदाया प्रकृति: जलपूर्तेश्च सुविधा: सूक्ष्मतया परिशीलता: मृदायाश्चोर्वय शक्ति वर्धनाथ प्रयास: कृता:। प्रचुरमात्राया: शस्य प्राप्ते: तेषां वांच्छाध्यर्व वेदस्य वहुषु मन्त्रेषु दृष्यते। यथा–

**उद्वत्स शतधारं सहस्त्र धारमासिकम्।**
**एवास्मावेदं धान्यं सहस्त्र धारमाक्षितम्।** (अथर्ववेद: vi-59.1)

यतोहि वैदिक काले जनानां जीवनं सामान्यतया कृष्याश्रितमासीत अत: तै: पृथिवी मातृवत् पृजिता सत्कृता च।

**माता भूमि: पुत्रोऽहं पृथिव्या** (अथर्ववेद: vi-1.12)

अथर्ववेदे यव्रीहि प्रभूति बहुविधानामन्नानाम एकं प्रकारकाणां औषधीनांच वर्णनं प्राप्यते।

**यस्यामन्त्रं व्रीहियवौ यस्था: इमा: पंच कृष्टय:**
**भूम्यै पर्जन्यपन्तै नमोहस्तु वर्षमेदसे** (अथर्ववेद: vii-1.42)

पर्वतात् संरक्षन्ति वर्षाया: कृतेऽनुकूल वातारणं रचयन्ति।

**जिह्वाया: अग्रे मथु में जिहवामूले मधुलकम**
**मम देहकृतावासे मम चिन्तमुपायसि।** (अथर्व– 1/34/02)

परं इदानी कुत्र माधुर्यदर्शनम् परिवहन याना कटु कठोर ध्वनि: कणीन् पीडयति मामेषु आपणे प्रचार वाहनेषु सर्वत्र सर्वकालं गर्जनं तर्जन भीषण भाषणं पापसंगीत विस्फोटनं जीवनं प्रासयात, मात्र एकं तकयति। परन्तु सततं परिवर्धमानं एतद् ध्वनि: प्रदुषणां नगरे तथैव ग्रामेहपि पादान प्रसारयति।

**नद्यो वै श्वल्पतीया: जगति परिचितं दुषितं मागंमम्भ:।**
**स्वल्पक्षीरो विपन्न: श्वर्सित कथमपि प्रायषो धेनु वर्ग:**
**नित्यं भुगषदक्ष: पतति चनवनं वृक्षमूले कुठार:**
**वायु: श्वासाय नाल तर्दाप, तव सस्वे: श्वागतं हे वसत।**

इन्द्रस्य या मही दृषत् क्रिमेविश्वस्य तर्हणी। तथा पिनग्मि स क्रिमीन् दृषदा सरलां इव। (अथर्ववेद: 11.31.1)

इक्षोरपि संकेत प्राप्यतेऽत्र:–

**परि त्वा परितलुनेक्षुणागामविद्रिषे**

**यथा मा कामिन्यसो यथा मन्नापमा असः।** (अथर्ववेदः-1.34.05)
इत्यमथर्ववेद प्राप्तौर्वनस्पति विज्ञान सम्बद्धैः शुद्धरणैः एतद् ज्ञायते यत् तदानीन्तना आर्यीवनस्पति विज्ञानस्य प्रारम्भिक ज्ञानेन सुपरिचिता आसन्।

# भौतिकं पर्यावरणम्

**नमिता महान्त**
अनुक्रमांक- 82

'परि' आवरण इति अनयोः योगेन पर्यावरण शब्दः निष्पन्नः भवति। पृथिवी एकः विचित्रः ग्रहः विभिन्नरूपेण जीवनगतः विकासः अभवत्। पृथिवी परितः यत् नैसर्गिकम् आवरणम् अस्ति, तत् पर्यावरणस्य पर्यायवाचकः।

वेष्टने परिवेषः स्याद् भानोः सविधमण्डले। अमरकोषे परिवेष इति शब्दः उपलब्धः परिवेशस्तु उपसूर्यकमण्डली। परितः विष्यते अनेन इति परिवेषः। परि विष् व्याप्तौ + घञ - परिवेषः। येन सर्वं व्याप्तं भवति स परिवेषः। जगत् परितः आवरणं पर्यावरणम्। सृष्टिप्रक्रियायां पंच महाभूतानि परस्परं संश्लिष्टानि। सूक्ष्मात् भूतात् स्थूलस्य भूतस्य उत्पत्तिः भवति। आकाशाद वायुः वार्याः अग्निः, अग्नेः आपः अद्भ्यः पृथिवी। एवं भौतिक सृष्टिक्रमः। पृथिवी स्थूलतमा यत्र अन्यानि भूतानि संश्लिष्टानि सन्ति। पर्यावरणे एतानि भूतानि गृहीतानि वर्तन्ते। आकाशः वायुः अग्नि जलम्, पृथिवी च भूतानि पर्यावरणमध्ये एतेषां ग्रहणं भवति। Ecology, Oecology इति शब्दद्वयं Oikocs इति ग्रीक शब्दतः निषन्नम् यस्यार्थः गृहम्। संस्कृते ओकस्य शब्दः गृहपर्यायवाचकः। प्राणिजगतः उद्भिज्जगतः च व्यापकें गृहं भवति पर्यावरणम्।

**भौतिक**- जैविकभेदेन पर्यावरणं द्विविधम भौतिकपर्यावरण पंचभूतानां, जैविके वृक्षाणां जीवानां च ग्रहणं भवति। प्राणिनः भूमेः भोजनं जलाज्जल वायुमण्डलात् प्राणवायुं च गृहीता जीवन्ति। भौतिक पर्यावरणस्य सुरक्षया जीवजगत् सुरक्षितं भविष्यति।

**पृथिवी**- पृथिवी विश्वम्भरा वसुधानी प्रतिष्ठा जगतो निवेशनी (अथर्ववेदः 12,16) पृथिवी अस्माकं माता पृथिवी जीवजगत वृक्षजगत, रत्नानि खनिजद्रव्याणि च धारयति। पृथिव्याः संरक्षणेन सर्वे सुरक्षिताः भविष्यन्ति। भूमेः प्रदूषणेन रोगाः जायन्ते। वृक्षाणां वृथा छेदनेन अत्यधिक- रासायनिक कीटनाशकविषप्रयोगेण च भूमिः प्रदूषिता शक्ति हीना च भवति। भूतिः प्रकृतिः उच्यते। अतः तस्याः संरक्षणेन सर्वं संरक्षितं भवति।

**जलम्**- जायते अस्मात् इति जम् लीयते अस्मिन् इति जलम्। यत्र जीवजगतः उत्पत्तिः ल्पयः च भवतः तद्भवति जलम्। एवम् अर्थस्य जलं प्रतीकं भवति। जलं सर्वत्र आप्नीति व्याप्तं भवति, अतः जलम् आपः इति उच्चते। पृथिव्यां यज्जलं प्राप्त भवति, सूर्यरष्मिभिः वाष्पीभवनप्रक्रियया तज्जलं मेघे सञ्चितं भवति। वर्षाकाले वृष्टया तज्जलम् अन्नम् उदथावचति अन्नाद भवन्ति भूतानि पर्जन्यादन्नसम्भवः इति गीतावचनम्। जले जीवनस्य बींज सृष्टम्। अप एव ससर्जादौ तासु बीजमवासृजम्। (मनुस्मृतिः 1.8)

जलम् रस उच्यते। पर्वतेभ्य: प्रवहन्तीषु जलधारायाम् मृत्तिकाधातुखनिजलवणादिरसा: सञ्चरन्ति। अत्र जीवनस्य धारकं वर्धकं च तत्वं निहितमस्ति, शिल्पामनेन वर्ज्यवस्तुत्यागेन जलं प्रदूषितं रोगजनकं च भवति। निर्मलेन जलेन जीवनम् आयुरारोग्यञ्च भवति।

**अग्नि:** – अग्नि: तेजोरूप: अग्ने: दाहिका भकित: सर्वमशुद्ध वस्तु नाशयति, पर्यावरणस्य विशुद्धिं च रक्षति। सूर्य: यज्ञाग्नि: गार्हपत्याग्नि: वनाग्नि: वडवाग्नि: इति विविधरूपेण अग्नि: शुद्धे: कारणं भवति, वायुमण्डलस्य विषप्रक्रियाम् अग्नि: नाशयति, संसारस्य हितं साधयति च।

**वायु:** – वाति गच्छति गन्धं वहति इति वायु: जीवनस्य आधार: वायु:। वायु: विश्वभेषजरूप:। प्राणवायु द्वारा जीवनस्य संचार: भवति। यज्ञे अग्नौ घृतयुक्ता: आहुतय: वायुमण्डलं शुद्ध कुर्वन्ति। वृक्ष: वायुमण्डलात अंगराम्लं गृहीत्वा अंगारं संजिनीति, प्राणवायुम् अम्लजानं नि:सारयति। वृक्ष: स्वपत्रमाध्यमेन रष्मिप्रतिपालन प्रक्रियया Photosy n thesis खाद्यं प्रस्तौति। वायुसंशोधने वृक्षाणां भूमिका महत्त्वपूर्णा। वृक्षाणां छेदनेन वायुप्रदूषणं वर्धते। वायुमण्डलस्य सूरक्षया जीवनं सुरक्षितं स्यात्।

**आकाश:**– आ समन्तात् कशते प्रकाशते इत आकाश: वायुमण्डलस्य शुद्धि द्युलोकस्य भूलोकस्य च संरक्षणम् आवश्यकम् आकाष: पिता पृथिवी माता द्यौर्न: पिता अथर्ववेद– (6,120,2) द्युलोकस्य अन्तरिक्षस्य वा प्रदूषणेन जीवनं च संकटापन्नं भवति।

एतानि भूतानि समन्वितरूपेण प्राणिनां जीवनं धारयन्ति पोषयन्ति च। एकस्यापि विपर्यये सृष्टे: विनाष: अवश्यम्यावी। विश्वस्य तदावणस्य पर्यावरणस्य च सुरक्षया सृष्टिरिय नूनं रमणीया भविष्यति। सर्वत्र शान्ति: विराजताम् इति धिया एतेषां सुरक्षानिमित्तं शान्तिमन्त्रं पठयते।

ॐ द्यौ: शान्ति:, अन्तरिक्ष शान्ति: पृथिवीशान्ति: आप: शान्ति:, ओषधय: शान्ति:, वनस्पतय: शान्ति: विश्वेदेवा: शान्ति:, बह्म शान्ति: सर्व शान्ति: शान्तिरेव शान्ति: सा मा शान्तिरेधि:। ॐ शान्ति: शान्ति: शान्ति: (यजुवेद:– 36–17)

# वेदेषु सृष्टि विज्ञानम्

**इन्द्रजित साहु**
शिक्षाशास्त्री प्रथमवर्षम्

विश्वसस्य यत् मौलिकं तत्त्वं विद्यते येन अस्य विश्वस्य सृष्टि: स्थिति: विनाशस्य भवति तदेव वेद शब्देन आख्यायति। स एव वेद: यज्ञ प्रधान: यज्ञ सम्पादनमेव वेदस्य मूलविषय:। विराटपुरुषस्य मानसिकयज्ञात् एव सृष्टिरियं सञ्जाता। इति पुरुषसुकतात् ज्ञायते। सोमेन देवा: जायन्ते, सौत्रामण्यां मानवा: इति ब्राह्मणवचनात् ज्ञायते यत् यज्ञादेव अस्य विश्वस्य सृष्टि: पुनश्च ऋग्वेदानुसारं पश्वचक्रमाधारेण सृष्टि: सञ्जाता। वेदेष्वऽपि सृष्टिरचनायां प्रतीकरूपेण अनेकेषां शब्दानां प्रयोग: संद्रस्यते। पुनश्च ऋग्वेदस्य दशममण्डले नासदीय अद्यमर्षणादि सूक्तेप्वपि सृष्टिक्रम: वर्णित:। अस्मिन् प्रसङ्गे वैदिकसाहित्येषु कीदृक् विचारा: प्रतिपादिता: सन्ति तेषां शास्त्रदृष्टवा विवेचनं सदृश्यन्ते उपादेधात: –

**ऊँ यज्ञेन यज्ञ मयजन्त देवास्तानि धर्माणि प्रथमान्यासनत्।**

**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः"॥** इति

(शुक्लयजुर्वेद काण्व - 35/16)

इति शुक्लयजुर्वेद वचनात् ज्ञायते यत् प्रजापतिः यज्ञेन देवान् सृष्ट्वा प्रजाभ्यः कथयति यत् हि देव त्वमपि यज्ञं कृत्वा प्रजावान् भव। श्रीमद भगवद्गीतायां भगवता श्रीकृष्णेनापि एतस्य वचनस्य पुष्टिं करोति। यथा -

**सहयज्ञाः प्रजाः सृष्टा पुरोवाच प्रजापतिः।**

**अनेन प्रसविप्यध्व मेषवाऽस्त्विषृकामधुक"॥** (गीता-3/10)

पुनश्च अग्निहोत्रेण अस्य विश्वस्य पालनं भवति। दर्शपूर्णमासाभ्याम् अस्य जगतः सृष्टिः भवतीति कात्यायन वचनम्। सृष्टेः मूलकारणं भवति यज्ञः। अस्माकं शरिरे प्रत्यहं दर्शपूर्णं यागस्य सम्पादनं भवतीति गीतायाः ज्ञायते यथा -

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**

**प्राणापान समायुक्तः पचाम्यन्नं चतुर्विधम्॥** (भगवद्गीता - 15/14)

यास्क प्रणित निरूकत ग्रन्थे। अयमेव अग्नि वैश्वानरः इति शाकपृणिः (निरुक्त-7/6) वचनानुसारं ज्ञायते अस्माकं शरीरे अग्नि वैश्वानररूपेण स्थित्वा चव्य-चेष्य-लेय पेयादि चतुर्विद्यम् अन्नं पचति। दर्शपूर्णामासाभ्याम् अस्य जगतः सृष्टिः इत्युक्ते अत्र दर्श नाम 'अग्निः' पूर्ण नाम 'अश्न' यदा अग्नि-अश्नयोः मिलनं भवति तदा वीर्यस्योत्पतिर्जायते। अतः अस्य जगतः सृष्टि द्धौ प्रधानतत्त्वौ स्तः अग्निः सोमश्च। यत् किमऽपि दृश्यते तत्सर्वम् अग्निसोमात्मकं जगत्। अग्निः अत्र अन्नस्य भक्षण- कर्त्ता पुरुषविशेषः परमात्मा तथा सोमोऽस्ति अन्नरूपः उपभोग्या स्त्री विशेषः। अनयोः तत्वयोः यथार्थ सम्मेलने सामाञ्जस्येन अस्य जगतः सृष्टि भवति। अस्य सिद्धान्तस्याधारेण सांख्यादर्शनं पुरुष-प्रकृति नामकं तत्त्व द्वयमेव नित्यतत्वरूपेण स्वीक्रियते। प्रकृतिपुरुषयोः संयोगात् सृष्टिर्जायते। यथा -

**पुरुषस्य दर्शनार्थं कैवलयार्थं तथा प्रधानस्य।**

**षड् ग्वान्धवदु भयोरपि संयोगस्तत्कृतः सर्गः॥** (सांख्य कारिका-21)

सृष्टेः प्राग गुणत्रयं साम्यावस्थायाम् अवतिष्ठते। पुरुष-प्रकृति संयोगे गुणेषु क्षोभः संजायते। गुणक्षोभे च रजोगुणे प्रवृतिनिमित्तकं चाश्चल्यम् उत्पद्यते। ततश्च सृष्ट्युत्पत्तिक्रमः सञ्चायते। यथा-

**प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः।**

**तस्मादपि च षोडशकात् पञ्चस्यः पञ्च भूतानि"॥** इति॥

(सांख्यकारिका - 22)

ऋग्वेदस्य दशममण्डले नासदीयादिसुक्तेषु सृष्टिक्रमः निरूपितः। ऋग्वेदे प्रतिपादित सृष्टि विज्ञान सूक्तेषु नासदीय सूक्तस्य स्थानं महत्वपूर्णं वर्तते। अस्मिन् सूक्ते सप्तमन्त्राः सन्ति। अत्र सृष्टिस्थितिप्रलयादीनां प्रतिपादनत्वात् अस्य सूकतस्य महत्त्वं अस्मिन् प्रसङ्गे सर्वोपरि विद्यते। अत्र सूक्तस्य प्रथममन्त्रे जगतः प्रारम्भिकस्थित्याः वर्णनं कुर्वन्नस्य

सूक्तस्य ऋषिः परमेष्ठी प्रजापतिः कथयति –

**नासदासीन्नो सदासीत् तदानीं नासीद्रजो**
**नो व्योमा परो यत्।**
**किमावरीवः कुह कस्य शर्मन्नभ्यः**
**किमासो द्रहनं गभीरम्"।इति।।** (ऋक्–10–129–04)

अनेन मन्त्रेण स्पष्टं भवति यत् सृष्टेः प्राक् सर्वप्रथम कामः समुत्पन्नोऽभवम्। अर्थात् अस्य जगतः सृष्टेः प्रागवस्थायां परमेस्वरस्य मनसि कामः नाम सङ्कल्प एवासीत्। अस्यैव कामस्याभिव्यक्तिः सृष्ट्याः विभिन्नतरेषु प्रतिकफलिताऽभवत् एवं अविद्या कामकर्माणि सृष्टिहेतुत्व कारणानि तदा एक एव तत्वमासीत् यत् विनाद्धिद्या स्वासग्रहणम् अकरोत् तथा निजस्वाभाविक भवत्या जीवित मासीत्। ऋक्वेदस्य अपरस्मिन् अद्यमर्षण सूकते सृष्टि प्रक्रिया विषये श्रुयते यथा –

**ऋतं च सत्यं चाभीद्धात तपसोऽध्यजायत।**
**ततो सत्र्यजायत ततः समुद्रो अर्णवः।।**
**समुद्रादर्णकादधि संवत्सरो अजायत।**
**अहरोत्राणि विदधद्धिस्वस्य मिषतो वयी।।**
**सूर्याचन्द्र मसो धात्रा यथापूर्वम् कल्पयत।**
**दिवं च पृथिवीं चान्तरिक्षमद्यो स्वः।।** (ऋग्वेद–10–190/2–03)

अनेन अधमर्षणसूकतने सृष्टितत्वं सम्यक्तया विविच्यते। अत्र या प्रक्रिया उपदिश्यते सृष्टितत्वेन शाकं एतस्याः सामञ्जस्य पूर्णरूपेण भवत्येव। अत्र ब्राह्मणः विश्वमिदं जायते इति वैदिक सिद्धान्तः मन्त्राणाम् अयमेवद्यिः भवति यत् आदौ प्रकाशमानात् परमात्मनो मायाद्यिष्ठान रूपात् उपादानभवात् एतत् सत्यम् अजायत। ततः तस्मादवेस्वरात् अहश्च रात्रिस्याजायत। ततः तस्मादेवखद्यत् अर्णवात्समुद्रात् संवत्सरः नाम सर्वः कालोऽजायत।

ऋग्वेदानुसारं सृष्टेः कल्पना पञ्चचक्र माचारीकृत्य वर्त्तते। अत्र सृष्टिः नाम स्वयं परमेष्ठि–सूर्य– पृथीवि–चन्द्राणां समष्ठिरूपा। एतत् पञ्चमण्डलानिका सृष्ठिः पुण्डरीकात्मकं संसार कथ्यते। पृथिवीतः ऊध्व स्वम्भुलोक, ततः ऊध्वम् अक्षरलोकः वर्त्तते। तदद्यः सृष्टिः श्रुयते यथा – **सुभुः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे।**

**दधे ह गर्भमृत्वियं यतो जातः प्रजापति।"।।**
(शुक्लयजुर्वेद काण्व संहिता–25/55)

**स्व्यंभूयसि श्रेष्ठी रश्मिर्वर्योदा असि वर्चो मे देहि।**
**सूर्यस्या वृमन्वावर्त्ते"।। इति** ।। (शुक्लयजुर्वेद काण्व शाखा–2/48)

पुनश्च प्रश्नोपनिषदि दृश्यते सूर्यः प्राणरूपः तथा चन्द्रमसः रचिम्। अनयोः सम्मिश्रण इयं सृष्टिः जाता यथा – आदित्यो ह वै प्राणी रयिरेव चन्द्रमा रयिवा

**एतत् सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्त्तिरेव रयिः।।**
(प्रश्नोपनिषद अथर्ववेदः –1/5)

# संस्कृतभाषायाः महत्त्वम्

**कादम्बिनी खमारी**
शि. शा- प्रथम वर्ष

भाष्यते अनया इति भाषां ध्वन्यात्मक शब्दैः विचाराणां प्रकटीकरणमेव भाषा। भाषाणाद् हि भाषा। भाषयति या सा भाषा। कथितमस्ति या भाषयैव मानवः मानव इति परिगण्यते। (Man is man Because of His Speech) सन्ति लोके बह्व्यः भाषाः यासु संस्कृतभाषा अन्यतमा मुख्या च।

सम् उपसर्ग पूर्वकं कृञ् धातोः क्त प्रत्यये कृते सति सुडागमे संस्कृत इति शब्दः निष्पन्नो भवति। सम्यक् कृतं संस्कृतम् अर्थात् प्रकृति प्रत्यय पुरस्सरं कृतमिति हेतोः अस्याः भाषायाः कृते नामैतत् सार्थक्यम् अभवत्। संस्कृतानां भाषा, संस्कृतां च भाषेति इति द्विधा विग्रहवाक्यं वर्त्तते।

संस्कृतभाषा सर्वासां भाषाणां जननी भवति। यथा त्रिवेणीसंगमे सरस्वती नदी अन्तर्लीना अस्ति तथैव संस्कृतभाषा सर्वासु भाषासु अन्तर्लीना इति सर्वे स्वीकुर्वन्ति। ताभ्यः भाषाभ्यः संस्कृतभाषायाः प्रभावः अत्यधिकः अस्तीति ज्ञायते। संपूर्ण भारतवर्षे तमिलभाषां विना अवशिष्टासु भाषासु 80 अथवा 90 पदानि संस्कृतभाषा सम्बद्धानि एव। अतः सर्वाः प्रादेशिक भाषाः संस्कृत भाषातः समुत्पन्ना इति नास्ति। अत्र संशयः।

संस्कृत वाङ्मये अनेकानि शास्त्राणि सन्ति। पुराणानि, वेदाः उपनिषदाः, नाटकाः, काव्यानि, महाकाव्यानि सर्वमेव संस्कृतभाषयां एव लिखितमस्ति। सर्वमेतत् संस्कृतभाषायाः महत्त्वम् आवेदयति। शिक्षा, निरूक्तं व्याकरणं ज्योतिषं, छन्दः, कल्पश्चेति षड् अंगानि, चतुर्दशविद्या, विज्ञानं, आयुर्वेद आदि ग्रन्थाश्च सन्ति।

ग्रीकतः लैटिनतः विश्वस्य समस्त भाषाणाम् उद्गमः संस्कृततः एव मन्यते। संस्कृतम् अनेक भाषाणां जन्मदात्री भवति। भाषा विकासक्रमे संस्कृतभाषा प्राचीन आर्यभाषा-देवभाषा च अस्ति।

संस्कृतयोः मध्ये घनिष्टः सम्बन्धः वर्तते। ''भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तया'' इति प्रसिद्धम् उक्तिं वर्तते। एषा संस्कृतिः न केवलं भारतदेशस्य अपितु समग्र विश्वस्य मुकुटायमानाहस्ति।

**''सत्य अहिंसादि गुणैः श्रेष्टा विश्वबन्धुत्वशिक्षिका।**
**विश्वशान्ति सुखधात्री भारतीया हि संस्कृतिः॥**
**संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाकलाः।**
**संस्कृते सकलं ज्ञानं संस्कृते किं न विद्यते॥''**

संस्कृतं संस्कृतेः आत्मा। अस्याः भाषाया माध्यमेनैव भारतीय संस्कृतिः सुप्रतिष्टिता अस्ति। बालकस्य जननादारभ्य मृत्युः पर्यन्तं क्रियमाणाः जातकर्म- नामकरण-

अन्नप्राशन-विवाहादि षोडशसंस्कारा: संस्कृत भाषया एव विधीयन्ते संस्काराणां संपन्ने अनया भाषया एव श्लोका: मन्त्रादि उच्चारणं कुर्वन्ति। न अन्य भाषया। पूजापाठ: यज्ञायागादि क्रियाश्च अपि अस्यां भाषायामेव विधीयन्ते। संस्कृते संस्कृतिं तु अन्तर्भवति सर्व ज्ञानमपि अत्र अन्तभर्ववति।

अस्माकं देशस्य विशिष्ट पुरुषाणां विचारा:, वेशभूषा:, कार्याणि, आचारा:, व्यवहार: इत्यादय: सर्वमपि अस्माकं संस्कृतौ एव अन्तर्भवति। अत: वक्तुं शक्यते यत् संस्कृति: संस्कृतं विना न तिष्ठति। संस्कृतं संस्कृति: अनयो: मध्ये घनिष्ट: सम्पर्क: वर्तते। नास्त्यत्र संशय: क्लेशश्च।

प्राक्कालादारभ्य अद्यावधि पर्यन्तं संस्कृतस्य स्थानं महत्वपूर्णं वर्तते। लोकेऽस्मिन् प्राचीनतमा भाषा भवति संस्कृतम्। मानवसभ्यताया: संस्कृतेश्च विकासे भाषाया: स्थानं महत्वपूर्णं वर्तते। व्यक्तित्वस्य विकासे अपि एषा भाषा सहायिका भवति। प्राचीनतमा रचना ऋग्वेद: अस्यां भाषायां एव विद्यते। यस्य रचनाकाल: भारतीया: विद्वांस: 2500 खृष्ट्र पूव इति मन्यन्ते। भारतीयानां विश्वानुसारं सृष्टिकर्तु: भगवान् ब्रह्मण: मुखात् वेदमयी संस्कृतवाणी निस्तृता-

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यत: सर्वा: प्रवृत्तय:॥**

संस्कृते न केवलं वेद वेदागादि वर्णितमस्ति अपितु संस्कृतभाषा दोषरहिता, सरला- गम्भीरा-मधुरा भाषा-देव भाषा वैज्ञानिकी च अस्ति। भाषा- साहित्य-व्याकरणदि ज्ञानं-चरित्र निर्माणं- बौद्धिक विकास: आत्मानुशासनस्य च ज्ञानं अस्यां भाषायामेव प्राप्तुं शक्यते। एषा भाषा वैज्ञानिकी अस्तीति नास्ति अत्र संशय:। धर्मार्थकाममोक्षार्थमपि एषा भाषा अत्यन्तमुपकराति। अत: सर्वै: संस्कृतं पठनीयम्। संस्कृतस्य प्रचारं प्रसारं च करणीयम्।

जयतु संस्कृतम्, जयतु भारतम्॥

# वेदेषु कृषि विज्ञानम्

**प्रभात कुमार नायक**
शिक्षाशास्त्र- प्रथम वर्ष रोल न:- 65

वैदिक कार्याणां प्रमुखो व्यवसाय: कृषि: आसीत्। अनेनैव हेतुना तदानीन्तन समये कृषि कर्म अत्युन्नतावस्थां प्राप्तवान्। ऋग्वेद स्यार्थर्ववेदस्यानेकेषु मन्त्रेषु प्रयुक्त: कृषि शब्दोऽस्य मुख्य: संकेतकौऽस्ति। प्रचुरमात्रायां सस्यप्राप्यै वैदिकैरायै: मृदाया: प्रकृति: जलपुतैश्य सुविधा: सुक्ष्मतया परिशीलिता: मृदाया- श्चीर्वराशक्ति वर्धना प्रयास: कृता:। प्रचुर मात्रायां सस्यप्राप्ते: तेषां वाञ्छाऽथर्वेदस्य बहुषु मन्त्रेषु दृश्यते। यथा:-

**उदुत्सं शतधारं सहस्त्रधारमाक्षिकम्।**
**एवास्मावेदं धान्यं सहस्त्रधार माक्षितम्॥**

(अथववेद: टप्- 59-1)

यनोहि वैदिक काले जनानां जीवनं सामान्यनया कृप्याश्रिनमासीत्। अनस्तै: पृथिवी मातृवन पूजिता सत्कृजा च माताभूमि: पुत्रोऽहं पृथिव्या:।

(अथववेद: ग्प्- 1-2)

अथर्ववेदे यवव्रीहि प्रभूति वहुविधानामन्तानामनेक प्रकारकाणामेषधी नाञ्च वर्णनं प्राप्यने-

'' यस्यामन्त्रं ब्रीहियवौ यस्या: इमा: पञ्च कृप्टय:
भूम्यै पर्जन्य पन्त्यै नमोऽस्तु वर्षमेदसे।''

(अथववेद: ग्प्-1-42)

खल्वइत्यस्याप्युल्लेखोऽस्मिन् वेदे उपलभ्यते।
यस्य व्याख्या सायणाचार्येण चाणकरूपे कृताऽस्ति।
इन्द्रस्य या मही दुषत् क्रिमेर्विश्वस्य तर्हणी
तथा पिनप्मि स क्रिसीन् दृषदा सलवां इव

(अथववेद: प्प्-31-1)

इक्षोरपि सङ्केत: प्राप्यनेऽत्र : -

'' परित्वा पारितत्नु नेक्षुणगामविछिषे
यथा मां कामिन्यसो यथा मन्नापगा अस:''

(अथववेद: प्-34-5)

इत्थमथर्ववेद प्राप्तैर्वनर्स्पात विज्ञान सम्बद्धै रूद्धरणै: रातद क्षायते यत् तदानीन्तना आर्या: वनस्पति विज्ञानस्य प्रारम्भिक ज्ञानेन सुपरिचिना आसन्।

# विद्यालय एवं समाज

**जय किशन कुमार**
शिक्षाशास्त्री प्रथम वर्ष

शिक्षा और समाज एक-दूसरे के पूरक और परस्पर सम्बन्धित हैं। वस्तुत: इसका सम्बन्ध कारण और परिणाम का है। क्योंकि समाज जैसा होता है वैसी ही शिक्षा होती है। प्रत्येक समाज अपने सदस्यों का समुचित विकास करने के लिए शिक्षा की व्यवस्था करता है।

बालकों के समुचित विकास एवं उचित शिक्षा के लिए प्रत्येक समाज को प्रत्येक अवस्था के बालकों का वातावरण आकर्षक तथा उसमें योग्य एवं अनुभवी शिक्षकों की व्यवस्था होना चाहिए। शिक्षा संस्थाओं को बच्चे के शारीरिक मानसिक, चारित्रिक, व्यावसायिक एवं आध्यात्मिक सभी प्रकार के विकास में सहायक होना चाहिए इसके अतिरिक्त समाज को व्यावसायिक शिक्षा संस्थाओं की भी स्थापना करनी चाहिए ताकि उनसे बालक अपनी रूचि, क्षमता और आवश्यकतानुसार तकनीकि शिक्षा प्राप्त कर सके

और उसे नौकरी के लिए दर-दर न भटकना पड़े।

बच्चों का मानसिक विकास करने के लिए समाज को जनसाधारण के लिए पब्लिक पुस्तकालय एवं वाचनालय स्थापित करना चाहिए। इससे जनशिक्षा में भी बड़ा सहयोग मिलता है। बच्चों को बदलते हुए समाज से परिचित कराने के लिए वाचनालयों में देश-विदेश के समाचार-पत्रों और पत्रिकाओं को मंगवाना चाहिए।

शिक्षा का एक उद्देश्य बालक का सर्वांगीण विकास करना है। अतः बालकों के शारीरिक विकास के लिए व्यायामशालाओं, खेलकूद संगठन, शारीरिक प्रशिक्षण आदि की भी व्यवस्था करनी चाहिए। जो समाज ऐसा नहीं करते वे शिक्षा के प्रति जागरुक नहीं कहे जा सकेते।

इसके अतिरिक्त प्रत्येक व्यक्ति की रूचि, अभिरूचि, योग्यता, क्षमता आदि भिन्न-2 होती है। बालक के साहित्यिक एवं सांस्कृतिक विकास के लिए नाटक, क्लब वाद-विवाद समितियाँ, संगीत सम्मेलन, कवितापाठ, अन्तयाक्षरी प्रतियोगिता आदि की व्यवस्था करनी चाहिए।

विभिन्न संस्थाओं, संगठनों आदि को मिलाकर समाज बनता है। सामाजिक प्रगति के लिए संगठन या संस्था का जागरूक होना आवश्यक है प्रत्येक संस्था का पृथक्-पृथक् महत्व है। अतः विभिन्न सामाजिक इकाइयों को शिक्षा के क्षेत्र में सहयोग करना चाहिए।

इस संक्षेप में कहा जा सकता है कि समाज शिक्षा का सबल अभिकरण है। समाज अपनी संस्कृति की रक्षा के लिए विद्यालयों की स्थापना करता है। विद्यालय में जो कुछ भी होता है वह समाज की आवश्यकताओं को ध्यान में रखकर ही होता है अन्यथा उनका कोई मूल्य नहीं होगा।

# महाभारते वृक्षविज्ञानम्

**येषलाल पाण्डे**

शिक्षाशास्त्री प्रथम वर्ष (व्यास वर्गः)

वयं जानीमः एवैतद् भारतं विशेषतो जगत्यायु वेदत्वात् प्रसिद्धम्। अत्रत्या आयुर्वेद निहिता चिकित्या परम्परा विश्व विख्याता, विश्व वन्द्या, विश्वभोग्या विश्व भोक्ता चास्ति। इयं चिकित्सा विश्वेषतो वृक्षमूला वर्तते। इत्यत्रौषधं प्रायः वृक्षे निर्मितं भवति। वृक्षाणं महत्वं वेदेषु उपनिषत्सु पुरोणेषु दृश्यते एव। महाभारते यत्र मानवानां युद्ध समाप्ते सति ''शान्ति पर्वाणि'' भीष्म युधिस्ष्ठिर संवादान्तर्गते भृगु भारद्वाज संवादे वृक्ष महत्वम् प्रतिपादितं विशेषतो वृक्ष- विक्षानं प्रर्स्तोति।

अत्र भारद्वाजः प्रश्नं करोति-यथा इदं विश्वं स्तावर जंगमात्मकं वर्तते। स्तावर जंगमाह पंचभूतैः युक्ताः भवन्ति तथा भवतो चयते, परं वृक्षाणां शरीरे पचं धातवः कस्मान्नोपलभ्यते वृक्षाः पंच भौतिकाः प्रोक्ताः तथापि ते श्रवणमपि न कुर्वन्ति, गन्ध सेवनमपि न कुर्वनि

ते स्पर्भमपि न जानति मे रूपमपि न जानन्ति तर्हि ते कथं पचं भौतिकाः स्युः? (महाभारत शान्ति पर्व) अत्र भृगु महर्षि समाधानं यच्छन् कथयति धानामपि वृक्षाणां आकाशः निश्चित रूपेण वर्तते। यतोहि महाभारते उल्लिखित वर्तते तत्र पुष्प फलोत्पत्ति जायते। तथा च तत्र अग्निरपि वर्तते। यतोहि तत्पन्नं म्लायते। तत् पर्ण म्लायते शीर्यते तस्मात् स्पर्शानुभूमिरपि वर्तते। श्रवण शक्तिः समाधानां अनिलस्य अनतस्य विद्युतश्च भीषणः शौधैः वृक्षाणां पुष्पानि फलानि पत्राणि च विश्रियन्ते, तेनेदं दायते यतो श्रोतुमपि प्रभवन्ति। एतद् भिन्नं श्रीमद् भगवद् गीतायामपि उल्लिखितं वर्तते यत–

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्न सम्भवः।।**
**यज्ञाद्भवति पर्जन्यो, यज्ञः कर्म समुद्भवः।।३/१४।।**

एवञ्च वृक्षाः विलोकयितुं प्रभवन्ति नाम तेषां दृष्टिरपि वर्तते। दृष्टि समाधाने अत्र ऋषिः कथयति वयं तदा गमनं व्यापारं कुर्मस्तदा एकस्माद् स्तानाद् प्राप्तव्यं स्थानम प्रति गमनं कुर्मश्चेत् तत्र दृष्टि व्यापारः अपेक्षितो भवति। विना स्खलेन यथा मार्गे गमनं दृष्टि शक्तिं विना सौख्यमेव नास्ति। अत्र तदेव इदं कर्तुं महर्षिः कथयति लता पादपमारोहति तद्वेष्टन् करोति भूमावचि अग्रे गमनं करोति। दृष्टि विरहितस्य गमनं न भवति। अन्येच केचन वृक्षाः सूर्याभिः मूखिः भूयः भ्रमणं कुर्वन्ति। तेनापि तद् दर्शन व्यापारो गम्यते। तेषां घ्राणशक्तिः समाधानं कथयति–यद् यथा मानवाः अन्ये च जन्तवः रोगिणो भवन्ति, तथैव वृक्षाः अपि रोगिणो भवन्ति। तेषां स्वास्थ्यं विविधैः धूपैः पुनः प्राप्यते अनेन गम्यते यत् तेषां घ्राणशक्तिरपि वर्तते। तथा च रसेन्द्रिय समाधानं यच्छता तेनोच्यते यत् वृक्षाः पादेन जलं विवन्ति तथा पादेनौषध ग्रहणं कृत्वा व्याधिः प्रतिकारं कुर्वन्ति। एवमत्र वृक्षाणां पर्णानि म्लायन्ते तस्मात् तेषां स्पर्शज्ञानं अनिलानल विद्युत्घोषैः पुष्पाणि फलानि च विश्रियन्ते।

तस्मात् तेषां श्रवणेन्द्रिय ज्ञानं लताः वृक्षाः रोहणं कुर्वन्ति केचन सूर्याभिमूखि भूय भ्रमन्ति। तस्मात् तेषां दृष्टिज्ञानं वर्तते। विविधैः धूपैः तेषां व्याधिनाश्ये भवति अतः तेषां घ्राणेन्द्रिय ज्ञानं वर्तते। तथा च पादेन सलिल पानं तथा औषधि ग्रहणं कुर्वन्ति। तस्मात् तेषां रसेन्द्रिय ज्ञानं वर्तते इति महर्षिणा भृगुणा प्रमाणैः प्रमाणित कृतम्। वृक्षाणां सुख दुःखयो–रनुभूतिरपि वर्तते, तथा च छिन्नस्य वृक्षस्य विरोहणं भवति। तस्मात् तत्र प्राणानि सन्ति। एवमत्र प्राणानां समाधानमपि विहितं यथा–

**सुख दुःखयोश्च गुहणा च्छित्रस्य नो विरोहणात्।**
**जीवं पश्यामि वृक्षाणां चैतन्य न विद्यते।।** (म.भा.शा.)

# अनुशासनस्य महत्त्वम्

**मंगल राम**
शिक्षाशास्त्री प्रथम वर्ष

वर्तमान समये सर्वस्मिन् जगति अनुशासनं दरीदृश्यते। प्रकृतिरपि अनुशासनबद्धा विलोक्यते, यथा- सूर्यो नियमित एव परिभ्रयन्ति। प्रकृते: अनुशासन पालनत्वात् सर्वत्र समाञ्जस्यं वर्तते। यदि मनुष्या: अपि अनुशासनबद्धा: स्यु:। तर्हि शोभनं भवेत्। सर्वेमानवै: अनुशासन नियमा: अवश्यमेव परिपालनीया यतो मानव जीवने अनुशासनस्य खलु महती अपेक्षा वर्तते। यदि जना: स्वेच्छया यत्र-तत्र यथा-तथा वर्तैरिन तदा तु जगतो गतिर्विचित्रैव स्यात् सर्वत्र कार्यहानिरेव भवेत्। अत: जीवनोन्नत्यै जीवनसाफल्याय चानुशासनम् अनिवार्यम्। शैशवाद आरभ्य वृद्धत्वं यावद् अनुशासनम् आवश्यकं वर्तते। बाल्ये माता पित्रो: विद्यालये गुरो: गृहस्थाजीवने पत्यु: पत्न्या वा, वृतिस्थानेषु उच्चाधिकारिणाम् अनुशासनं पाल्यते। अन्तरेण अनुशासनं पारिवारिकं सामाजिकं, राष्ट्रियं च संघटनं विच्छिद्येत। रत्नं घर्षणच्छेदनादिनाऽनुशिष्टं सद् महार्घत्वं भजते। अश्वा: सुनियन्त्रिता: समरभूमौ विजयं लम्भयन्ति सैनिका: अनुशासनं पालयन्त: स्वसेनापते: संकेतमात्रेण एकधा आचरन्ति व्यवहरन्ति च। सेनासु यादृशं कठोरम् अनुशासनम् तादृश्येव विजय-वैजन्ती समासाधते। किमन्यत् महात्मनो गान्धेर्नेतृत्वम् अनुशासनं चानुसृत्यैव भारतं स्वातन्त्र्यं लेभे। अनुशासनस्यैव एतन्महत्वं यत् सामाजिकं राष्ट्रियं च कार्यजातं सारल्येन प्रचरति।

अनुशासन-दृष्ट्यैव निर्दिश्यते- लालयेत् पञ्च वर्षाणि, दश वर्षाणि ताडयेत्। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणा:। तैतिरीयोपनिषदि अत एव प्रोच्यते वेदमनृच्याचायोऽन्तेवासिनम् अनुशास्ति। सत्यं वद धर्म सूत्रेषु स्मृत्यादिषु चाचारवर्णनम् कर्तव्याकर्तव्य विधाननिरूपणम् सर्वमप्यनुशासनमूलम्। अनुशासनमेव साधनां शिक्षयति। बुद्धिस्तथा-विधानुशासनेन कवित्वम् ऋषित्वं ज्ञानित्वं वैज्ञानिकत्वं च सिद्धयति। अनुशासनमूलकमेव संगीत-नृत्य विविध कला-विशेषज्ञत्वम् अनुशासनस्याभावेन मानव: प्रकृतिदत शक्तीनामुचितप्रयोगं कर्तुं न शक्नोति। अनुशासनेनैव व्यक्ति: उत्तमशक्ति प्राप्नोति अनया शक्त्या जन: स्वनैसर्मिक प्रवृतीनां विकासे समर्थो भवति। व्यक्तिगतदृष्ट्या अनुशासनस्याति महत्वं वर्तते। तेनैव साकमनुशासनस्य सामाजिक दृष्ट्याप्यातिहत्वं वर्तते। दार्शनिकस्य अफलातून महोदयस्य कथनमस्ति- ''राष्ट्रस्य निर्माणं शिलाभि: वृक्षैश्च नैव क्रियते अपितु नागरिकाणां चरित्रेण क्रियते।'' इदं कथनं पूर्णरूपेण सत्यमस्ति। यदा कस्यापि देशस्य नागरिका: अनुशासिता: भवन्ति तदा ते स्वदेशम् उन्नतिपथमानेतुं समर्था: भविष्यन्ति। अनुशासिता: जना: सच्चरित्रेण, मनसा वचसा, कर्मणा च शुद्धा: भवन्ति। अनेन भवति यत् राष्ट्रस्य कृते सम्पूर्णसमाजस्य कृते च अनुशासनस्यातिमहत्वमस्ति। तथ्यमिदमितिहाससहाय्येनापि स्पष्टं कर्तुं शक्यते। इतिहास: वर्तते यत् कोऽपि देश: अनुशासनहीनतया ग्रस्त: जात: तदैव स: बाह्यशक्तीनां दासतामपि स्वीकरिष्यति। अनुशासनेनैव व्यक्तिषु समाजेषु राष्ट्रेषु वा स्फूर्ति: उत्पन्ना भवति। अस्याभावे सर्वेषां शक्ते: विनाशो भवति। अत: अनुशासनं बहु आवश्यकम्।

# संगणकसहभागाधिगमः ई. अधिगमश्च

**सुरेश कुमार पाण्डेय**
शिक्षाशास्त्री प्रथमवर्षम्

परिवर्तने समाजे समाजस्य निर्माणे विज्ञानस्य प्रविधेश्च महत्योगदानं वर्तते। अद्यमानवानां दृष्टिकोणः वैज्ञानिकः सञ्जातः अस्ति। सम्प्रति संगणक माध्यमेन शिक्षा प्रचलति। युगेस्मिन् यान्त्रिकी करणस्य प्रभावः अवलोक्यते। अतः मनुष्यस्य बहूनि कार्याणि यान्त्रिकपद्धत्या स्थानान्तरितानि क्रियन्ते, येन यन्त्रवत् कार्याणि कर्तुं जनानाम् अवकाशः लभ्यते। तेन ते अन्येषु सर्जनात्मक क्षेत्रेषु स्वसमयस्य उपयोगं कर्तुं शक्नुयुः। पञ्चत्रिंशत् वर्षेभ्यः पूर्वः विद्यालयेषु, विश्वविद्यालयेषु सङ्गणक नासीत्। गणकानाम् अपि उपयोगः अत्यन्तं सीमितमैव आसीत्, परञ्च सम्प्रति अध्ययनम्, अधिगमः, कार्यम् एतत् सर्वं सङ्गणकेन अल्पसमये अल्पपरिश्रमेण भवति एतदर्थम् एतस्य महती उपयोगिता अस्माकं जीवने वरीवर्तते।

अधिगमः – मानवस्य अधिगमप्रक्रिया जन्मतः एव आरभ्यते। अतः सः आजीवनम् अधि गच्छन् भवति। मानवस्य अधिगमार्थ न कोपि निश्चितः समयः न किञ्चित् सुनिश्चितं स्थानं भवति। इत्यस्य अर्थः शिक्षणम्, अध्ययनं, व्यवहारपरिवर्तनम् इत्यादि भवति। परन्तु सूक्ष्मरूपेण अधिगमेत्यस्यार्थः व्यवहारेण अनुभवेन च जायमानं अभिप्रायः वर्तते" ELEC-TRONIC-LEARNING¸

**ई. अधिगमः** – इत्यत्र उभौ शब्दौ विद्येते। अत्र ई. इत्यस्य अर्थः (electronic) यंत्रं भवति, तथा च अधिगमः इत्यस्य अर्थो भवति व्यवहारपरिवर्तनम्, अध्ययनं वा। इमम् ई. अधिगमः" आंग्लभाषायाम् (Electronic-Learning) इत्युच्यते। अतः एवं वक्तुं शक्यते यत् यन्त्र माध्यमेन क्रियमाणः अधिगमः ई. अधिगमेति। ई. अधिगमान्तर्गते Google, Internet, Youtube, Smart Board" इत्यादयः समागच्छति। अतः एतेन क्रियमाणः अधिगमः ई. अधिगमः। ई. अधिगमेन अस्माकं शिक्षणं सरलं सुन्दरं तथा च मनोवैज्ञानिकं च भवति। सम्प्रति एतस्य ई. अधिगमस्य" महती उपयोगिता वरीवर्तते। सङ्गणकेन ई. अधिगमेन वा अति जटिल समस्याः अपि समाधातुं शक्यन्ते। अतः प्रत्येकं क्षेत्रे अस्योपयोगं समास्थोस्ति।

सङ्गणकमाध्यमेन अधिगमः – आरम्भ काले सङ्गणकानि केवलं गणनायन्त्रत्वेन मन्यते स्म। किन्तु अनन्तरम् अनुभूतं यत् गणनायाः अपेक्षया अधिकं कार्यमपि अनेन साधयितुं शक्यते। अतः प्रत्येकं क्षेत्रे अस्योपयोगः आरब्ध अस्ति। सङ्गणकेन शिक्षादानकाले सर्वे छात्राः युगपत् उपविशन्ति। प्रत्येक छात्रस्य साक्षात्सम्बन्धः सङ्गणकस्य श्रवणयन्त्रेण सह, ध्वनिमुद्रणयन्त्रेण सह पिञ्जपट्टिकया सह च कार्यते। सङ्गणकमाध्यमेन अधिगमः सारल्येन अल्पसमये भवति। तथा च छात्राः सम्यकतया अधिगमः कर्तुं शक्नुवन्ति।

सङ्गणकाधिगमस्य महत्वम् – सङ्गणकेन अधिगमक्षेत्रे एका प्रतिधिकी क्रान्तिः समुत्पादिता।

एतस्य बहुविध महत्वानि अपि विद्यन्ते। तद्यथा –

सङ्गणकं पूर्णतया निर्वैश्यन्तिकशिक्षक: यत् पूर्वाग्रहेण रहितं भवति छात्राणां जाति, लिङ्गं, वर्ग: इत्यादि सङ्गणकं नैव प्रभावयितुमर्हति।

छात्रा: यावत् पाठ्यबिन्दुम् आत्मसात् न कुर्वन्ति – तावत् पर्यन्तं सङ्गणकेन पाठ्यबिन्दो: विश्लेषणं पुन: पुन: कारयितुं शक्यते।

सङ्गणकात् शिक्षितुं न कापि आयुसीमा भवति। अत: प्राथमिकस्तरात् विश्वविद्यालयस्तर पर्यन्तम् अध्येतृभ्य: एतद् यन्त्रम् उपयोगन्तुं शक्यते।

सङ्गणकेन अध्ययनं सारल्येन प्रतिपादयति अध्यापक:।

सङ्गणकेन अल्पसमये अल्पपरिश्रमेण कार्यं भवितुमर्हति।

निष्कर्ष: – सम्प्रति सर्वेषु विकषितप्रदेशेषु एतस्य मस्तिष्कयन्त्रस्य प्रभाविसाधनत्वेन उपयोग: क्रियमाण: वर्तते। अद्य एषा प्रणाली औपचारिकानौपचारिकशिक्षयो: द्वयोरपिस्तरयो: कृते प्रयुज्यते।

वर्तमानसमये – NCERT, NCTE, UGC, CIET इत्यादि बहुविधपरियोजना: समक्षिता: सन्ति। एतेन शिक्षणं यद्यपि यान्त्रिक शिक्षणम् इति बहव: अभिप्रयन्ति, तथापि अनेन अल्पीयसि काले बहुभ्य: छात्रेभ्य: छात्रास्तरानुगुणं प्रभाविरूपेण शिक्षणं प्रदातुं शक्यते।

# हमारा प्यारा तिरंगा

**लक्ष्मीप्रिया सेठी**
शिक्षाशास्त्री प्रथम वर्ष

भारत माता की पहचान है तू
हर भारतीय की जान है तू
तू ही प्यारा झण्डा हमारा
और हमारी शान है तू।
शान्ति पथ विश्व को दिखाता
त्यागी सबको तू है बनाता
देश–देश में पहुँचाना
प्यार का पैगाम है तू।।
मेरे लिए लहू के हर बूँद और जान
तुझ पर निछावर है पूरा हिन्दुस्तान
कोटि–कोटि प्राणों का मान–सम्मान है तू।।
तेरी आभा फैली है दिशा–दिशा
सबके मन में लाती भरपूर आशा
है अमर केतू–कितना पावन और महान है तू।।
कोटि–कोटि वीर है अर्पित

जीवन की हर साँस समर्पित
ज्योति तेरी अद्भुत
भक्ति अमर भूतिमान है तू।।
पूजा तेरी करते हैं हम
साथ हमारे रह जनम-जनम
अमित हमारा मान है तू।।

# शिक्षा मनुष्य के जन्मगत अधिकार

**सुशान्त माझी**
शिक्षाशास्त्री प्रथमवर्ष

हमारे जीवन में शिक्षा का महत्त्व शुरु से ही रहा है। शिक्षा हर एक नागरिक की एक ऐसी आवश्यकता है जिसके बिना कोई भी नागरिक जिंदगी में कुछ खास नहीं कर पाता है। इस विषय में कहावत है -शिक्षा के बैगर मनुष्य एक पशु के समान है।

हमारे देश में शिक्षा प्राप्त करने के लिए बहुत सारे विद्यालय-महाविद्यालय बनाये गए हैं, हर तरह से उन विद्यालयों-महाविद्यालयों में बच्चों को उचित शिक्षा दिलवाने के लिए बहुत सारी सुविधाएँ दी जा रहीं हैं। आज इस जमाने में शिक्षा को तेजी से फैलाने के लिए सरकार के द्वारा हर शहर गली हर गाँव में बहुत से विद्यालय खोले गये हैं क्योंकि कहते हैं कि-

**पढेगा इण्डिया तभी तो बढ़ेगा इण्डिया।**

हमारे देश के लोग पहले की अपेक्षा शिक्षा का महत्त्व को समझ चुके हैं। आज सिर्फ पुरुष ही नहीं स्त्रियाँ भी इस दौड़ में आगे बढ़ रही हैं। आज हमारे देश के महान् लोगों ने बहुत तरक्की हासिल की उन्होंने अपने देश का नाम रोशन किया इसका अगर सबसे महत्त्वपूर्ण कोई कारण है तो वह है उनको दी जाने वाली उचित शिक्षा। हमारे देश के प्रत्येक नागरिक को शिक्षा लेने का अवसर दिया जाता है। पहले के जमाने में शिक्षा प्राप्त करने के अवसर कम होते थे लेकिन आजकल छात्रवृत्ति की सुविधा दी जा रही है। हमारे देश के राष्ट्रपति ए.पी.जे अब्दुल कलाम जो कि गरीब थे। लेकिन उन्होंने पढाई की और पढ़ाई के महत्त्व को समझते हुए अपनापूरा ध्यान अपनी पढ़ाई पर दिया और अपने लगातार किये गए प्रयासों से उन्होंने बहुत सारे आविष्कार किये। उन्होंने अपने देश का नाम रोशन किया और हमारे भारत देश के राष्ट्रपति बनें। अगर ये सब कर पायें तो इसमें सबसे बड़ा योगदान उनकी शिक्षा का है क्योंकि- शिक्षा के बगैर इंसान कुछ भी खास नहीं कर पाता।

हमारे देश में गरीब जनसंख्या भ्रष्टाचार जैसी बहुत सी समस्याएँ हैं लेकिन आजकल के लोगों को उच्च्व शिक्षा प्रदान करने के अवसर मिलते हैं जिससे यह समस्याएँ तेजी से कम होती जा रही है। शिक्षा जिन्दगी की है एक क्षेत्र में महत्त्वपूर्ण है बहुत से लोग ऐसे होते हैं वह सोचते हैं कि मुझे अच्छी शिक्षा नहीं प्राप्त करनी है क्योंकि कोई नौकरी नहीं प्राप्त करनी है क्योंकि कोई नौकरी नहीं करना चाहता हूँ लेकिन यह सोच बिल्कुल गलत है क्योंकि शिक्षा का मतलब यह नहीं है कि शिक्षा प्राप्त करके अच्छी नौकरी करें बल्कि शिक्षा का उद्देश्य आपको ज्ञान प्रदान करना है -जिससे आप किसी भी क्षेत्र में उन्नति कर सकें।

